# जैमिनीयारण्यक

प्रजापतिर्वा इदं त्रयेण वेदेनाजयद्यदस्येदं जितं तत् १ स ऐक्षतेत्थं चेद्वा अन्ये देवा अनेन वेदेन यक्ष्यन्त इमां वाव ते जितिं जेष्यन्ति येयम्मम हन्त त्रयस्य वेदस्य रसमाददा इति २ स भूरित्येवर्ग्वेदस्य रसमादत्त सेयम्पृथिव्यभवत् तस्य यो रसः प्राणेदत्सोऽग्निरभवद्रसस्य रसः ३ भुव इत्येव यजुर्वेदस्य रसमादत्त तदिदमन्तरिक्षमभवत् तस्य यो रसः प्राणेदत्स वायुरभवद्रसस्य रसः ४ स्वरित्येव सामवेदस्य रसमादत्त सोऽसौ द्यौरभवत्तस्य यो रसः प्राणेदत्स आदित्योऽभवद्रसस्य रसः ५ अथैकस्यैवाक्षरस्य रसं नाशक्नोदादातुमोमित्येतस्यैव ६ सेयं वागभवत् ओमेव नामैषा तस्या उ प्राण एव रसः ७ तान्येतान्यष्टौ अष्टाक्षरा गायत्री गायत्रं साम ब्रह्म उ गायत्री तदु ब्रह्माभिसम्पद्यते अष्टाशफाः पशवस्तेनो पशव्यम् ८ १

प्रथमेऽनुवाके प्रथमः खण्डः

स यदोमिति सोऽग्निर्वागिति पृथिव्योमिति वायुर्वागित्यन्तरिक्षमोमित्यादित्यो वागिति द्यौरोमिति प्राणो वागित्येव वाक् १ स य एवं विद्वानुद्गायत्योमित्येवाग्निमादाय पृथिव्याम्प्रतिष्ठापयत्योमित्येव वायुमादायान्तरिक्षे प्रतिष्ठापयत्योमित्येवादित्यमादाय दिवि प्रतिष्ठापयत्योमित्येव प्राणमादाय वाचि प्रतिष्ठापयति २ तद्धैतच्छैलना गायत्रं गायन्त्योवा३चोवा३चोवा३छुम्भा ओवा इति ३ तदु ह तत्पराङिवानायुष्यमिव तद्वायोश्चापां चानु वर्त्म गेयम् ४ यद्वै वायुः पराङेव पवेत क्षीयेत स स पुरस्ताद्वाति स दक्षिणतस्स पश्चात्स उत्तरतस्स उपरिष्टात्स सर्वा दिशोऽनुसंवाति ५ तदेतदाहुरिदानीं वा अयमितोऽवासीदथेत्थाद्वातीति स यद्रेष्माणं जनमानो निवेष्टमानो वाति क्षयादेव बिभ्यत् ६ यदु ह वा आपः पराचीरेव प्रसृतास्स्यन्देरन्क्षीयेरंस्ताः यदङ्कांसि कुर्वाणा निवेष्टमाना आवर्तान्सृजमाना यन्ति क्षयादेव बिभ्यतीः तदेतद्वायोश्चैवापां चानु वर्त्म गेयम् ७ २

प्रथमेऽनुवाके द्वितीयः खण्डः

ओवा ओवा ओवा हुम्भा ओवा इति करोत्येव एताभ्यां सर्वमायुरेति १ स

यथा वृक्षमाक्रमणैराक्रममाण इयादेवमेवैते द्वेद्वे देवते संधायेमांल्लो-
कान्नोहन्नेति २ एक उ एव मृत्युरन्वेत्यशनयैव ३ अथ हिङ्करोति चन्द्रमा
वै हिङ्कारोऽन्नमु वै चन्द्रमाः अन्नेनाशनयां घ्नन्ति ४ तांतामशनयामन्नेन
हत्वोमित्येतमेवादित्यं समयातिमुच्यते एतदेव दिवश्छिद्रम् ५ यथा खं
वानसस्स्याद्रथस्य वैवमेतद्दिवश्छिद्रं तद्रश्मिभिस्संछन्नं दृश्यते ६ यद्वा-
यत्रस्योर्ध्वं हिङ्कारात्तदमृतं तदात्मानं दध्यादथो यजमानमथ यदितरत्सामोर्ध्वं
तस्य प्रतिहारात् ७ स यथाद्भिरापस्संसृज्येरन्यथाग्निनाग्निस्संसृज्येत यथा
क्षीरे क्षीरमासिच्यादेवमेवैतदक्षरमेताभिर्देवताभिस्संसृज्यते ८ ३

प्रथमेऽनुवाके तृतीयः खण्डः

तं वा एतं हिङ्कारं हिम्भा इति हिङ्कुर्वन्ति श्रीर्वै भाः असौ वा आदित्यो भा इति
१ एतं ह वा एतं न्यङ्गमनु गर्भ इति यद्ध इति स्त्रीणाम्प्रजननं निगच्छति
तस्मात्ततो ब्राह्मण ऋषिकल्पो जायतेऽतिव्याधी राजन्यश्शूरः २ एतं ह वा
एतं न्यङ्गमनु वृषभ इति यद्ध इति निगच्छति तस्मात्ततः पुण्यो बलीवर्दो दुहाना
धेनुरुक्षा दशवाजी जायन्ते ३ एतं ह वा एतं न्यङ्गमनु गर्दभ इति यद्ध इति
निगच्छति तस्मात्स पापीयाञ्छ्रेयसीषु चरति तस्मादस्य पापीयसश्श्रेयो
जायतेऽश्वतरो वाश्वतरी वा ४ एतं ह वा एतं न्यङ्गमनु कुभ्र इति यद्ध इति
निगच्छति तस्मात्सोऽनार्यस्सन्नपि राज्ञः प्राप्नोति ५ तं हैतमेके हिङ्कारं हिम्भा
ओवा इति बहिर्धेव हिङ्कुर्वन्ति बहिर्धेव वै श्रीः श्रीर्वै साम्नो हिङ्कार इति ६
स य एनं तत्र ब्रूयाद्बहिर्धा न्वा अयं श्रियमधित पापीयान्भविष्यति स यदा वै
म्रियतेऽथाग्नौ प्रास्तो भवति क्षिप्रे बत मरिष्यत्यग्नावेनम्प्रासिष्यन्तीति तथा हैव
स्यात् ७ तस्मादु हैतं हिङ्कारं हिं वो इत्यन्तरिवैवात्मन्नर्जयेत्तथा ह न बहिर्धा
श्रियं कुरुते सर्वमायुरेति ८ ४

प्रथमेऽनुवाके चतुर्थः खण्डः

सा हैषा खला देवतापसेधन्ती तिष्ठति इदं वै त्वमत्र पापमकर्णेहैष्यसि यो वै
पुण्यकृत्स्यात्स इहेयादिति १ स ब्रूयादपश्यो वै त्वं तद्यदहं तदकरवं तद्वै
मा त्वं नाकारयिष्यस्त्वं वै तस्य कर्तासीति २ सा ह वेद सत्यम्माहेति सत्यं
हैषा देवता सा ह तस्य नेशे यदेनमपसेधेत्सत्यमुपैव ह्वयते ३ अथ हो-
वाचैद्वाको वा वार्ष्णोऽनुवक्ता वा सात्यकीर्त उतैषा खला देवतापसेद्धुमेव

ध्रियतेऽस्यै दिशः ४ तद्दिवोऽन्तः तदिमे द्यावापृथिवी संश्लिष्यतः यावती वै वेदिस्तावतीयम्पृथिवी तद्यत्रैतच्चात्वालं खातं तत्सम्प्रति स दिव आकाशः ५ तद्बहिष्पवमाने स्तूयमाने मनसोद्गृह्णीयात् ६ स यथोच्छ्रायम्प्रतियस्य प्रपद्येतैवमेवैतया देवतयेदममृतमभिपर्येति यत्रायमिदं तपतीति ७ अथ होवाच ८ ५

प्रथमेऽनुवाके पञ्चमः खराडः

गोबलो वार्ष्णः क एतमादित्यमर्हति समयैतुं दूराद्वा एष एतत्तपति न्यङ् तेन वा एतम्पूर्वेण सामपथस्तदेव मनसाहृत्योपरिष्टादेतस्यैतस्मिन्नमृते निदध्यादिति १ तदु होवाच शाटचायनिस्समयैवैतदेनं कस्तद्वेद यद्येता आपो वा अभितो यद्वायुं वा एष उपह्वयते रश्मीन्वा एष तदेतस्मै व्यूहतीति २ अथ होवाचोलुक्यो जानश्रुतेयो यत्र वा एष एतत्तपत्येतदेवामृतमेतच्चेद्वै प्राप्नोति ततो मृत्युना पाप्मना व्यावर्तते ३ कस्तद्वेद यत्परेणादित्यमन्तरिक्षमिदमनालयनमवरेण ४ अथैतदेवामृतमेतदेव मां यूयम्प्रापयिष्यथ एतदेवाहं नातिमन्य इति ५ तान्येतान्यष्टौ अष्टाक्षरा गायत्री गायत्रं साम ब्रह्म उ गायत्री तदु ब्रह्माभिसम्पद्यते अष्टाशफाः पशवस्तेनो पशव्यम् ६ ६

प्रथमेऽनुवाके षष्ठः खराडः

ता एता अष्टौ देवताः एतावदिदं सर्वं ते करोति १ स नैषु लोकेषु पाप्मने भ्रातृव्यायावकाशं कुर्यात् मनसैनं निर्भजेत् २ तदेतदृचाभ्यनूच्यते चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति ३ तद्यानि तानि गुहा त्रीणि निहिता नेङ्गयन्ती तीम एव ते लोकाः ४ तुरीयं वाचो मनुष्या वदन्तीति चतुर्भागो ह वै तुरीयं वाचः सर्वयास्य वाचा सर्वैरेभिर्लोकैस्सर्वेणास्य कृतम्भवति य एवं वेद ५ स यथाश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपवदति ६ ७

प्रथमेऽनुवाके सप्तमः खराडः

प्रथमोऽनुवाकस्समाप्तः

प्रजापतिर्वा इदं त्रयेण वेदेनाजयद्यदस्येदं जितं तत् १ स ऐत्ततेत्थं चेद्वा अन्ये देवा अनेन वेदेन यद्त्यन्त इमां वाव ते जितिं जेष्यन्ति येऽयम्मम २ हन्तेमं त्रयं वेदम्पीळयानीति ३ स इमं त्रयं वेदमपीळयत्तस्य पीळयन्नेकमेवाद्धरं नाशक्नोत्पीळयितुमोमिति यदेतत् ४ एष उ ह वाव सरसः सरसा ह वा एवंविदस्त्रयी विद्या भवति ५ स इमं रसम्पीळयित्वापनिधायोर्ध्वोऽद्रवत् ६ तं द्रवन्तं चत्वारो देवानामन्वपश्यन्निन्द्रश्चन्द्रो रुद्रस्समुद्रः तस्मादेते श्रेष्ठा देवानामेते ह्येनमन्वपश्यन् ७ स योऽयं रस आसीत्तदेव तपोऽभवत् ८ त इमं रसं देवा अन्वैद्धन्त तेऽभ्यपश्यन्त्स तपो वा अभूदिति ९ इममु वै त्रयं वेदम्मरीमृशित्वा तस्मिन्नेतदेवाद्धरमपीळितमविन्दन्नोमिति यदेतत् १० एष उ ह वाव सरसः तेनैनम्प्रायुवन्यथा मधुना लाजान्प्रयुयादेवम् ११ तेऽभ्य-तप्यन्त तेषां तप्यमानानामाप्यायत वेदः तेऽनेन च तपसापीनेन च वेदेन तामु एव जितिमजयन्याम्प्रजापतिरजयत्त एते सर्व एव प्रजापतिमात्रा अया३मया३-मिति १२ तस्मात्तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यशः स य एतदेवं वे-दैवमेवापीनेन वेदेन यजते यदो याजयत्येवमेवापीनेन वेदेन याजयति १३ तस्य हैतस्य नैव का चनार्तिरस्ति य एवं वेद स य एवैनमुपवदति स आर्तिमृच्छति १४ ८

द्वितीयेऽनुवाके प्रथमः खराडः

तदाहुर्यदोवा ओवा इति गीयते क्वात्रर्ग्भवति क्व सामेति १ ओमिति वै साम वागित्यृक् ओमिति मनो वागिति वाक् ओमिति प्राणो वागित्येव वाक् ओमितीन्द्रो वागिति सर्वे देवाः तदेतदिन्द्रमेव सर्वे देवा अनुयन्ति २ ओमित्येतदेवाद्धरमेतेन वै संसवे परस्येन्द्रं वृञ्जीत एतेन ह वै तद्बको दाल्भ्य आजकेशिनामिन्द्रं ववर्ज ओमित्येतेनैवानिनाय ३ तान्येतान्यष्टौ अष्टाद्धरा गायत्री गायत्रं साम ब्रह्म उ गायत्री तदु ब्रह्माभिसम्पद्यते अष्टाशफाः पशवस्तेनो पशव्यम् ४ तस्यैतानि नामानीन्द्रः कर्माद्धितिरमृतं व्योमान्तो वाचः बहु-भूयस्सर्वं सर्वस्मादुत्तरं ज्योतिः ऋतं सत्यं विज्ञानं विवाचनमप्रतिवाच्यं पूर्वं सर्वं सर्वा वाक् सर्वमिदमपि धेनुः पिन्वते परागर्वाक् ५ ९

द्वितीयेऽनुवाके द्वितीयः खराडः

सा पृथक्सलिलं कामदुघाद्धिति प्राणसंहितं चद्धुश्श्रोत्रं वाक्प्रभूतम्मनसा व्याप्तं

हृदयाग्रम्ब्राह्मणभक्तमन्नशुभं वर्षपवित्रं गोभगम्पृथिव्युपरं तपस्तनु वरुणपरियतनमिन्द्रश्रेष्ठं सहस्राक्षरमयुतधारममृतं दुहाना सर्वानिमांल्लोकानभिविक्षरतीति १ तदेतत्सत्यमक्षरं यदोमिति तस्मिन्नापः प्रतिष्ठिता अप्सु पृथिवी पृथिव्यामिमे लोकाः २ यथा सूच्या पलाशानि संतृणानि स्युरेवमेतेनाक्षरेणेमे लोकास्संतृणाः ३ तदिदमिमानतिविध्य दशधा क्षरति शतधा सहस्रधायुतधा प्रयुतधा नियुतधार्बुदधा न्यर्बुदधा निखर्वधा पद्मम्क्षितिर्व्योमान्तः ४ यथौघो विष्यन्दमानः परःपरोवरीयान्भवत्येवमेवैतदक्षरम्परःपरोवरीयो भवति ५ ते हैते लोका ऊर्ध्वा एव श्रिताः इम एवं त्रयोदशमासाः ६ स य एवं विद्वानुद्गायति स एवमेवैतांल्लोकानतिवहति ओमित्येतेनाक्षरेणामुमादित्यम्मुख आधत्ते एष ह वा एतदक्षरम् ७ तस्य सर्वमाप्तम्भवति सर्वं जितं न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ८ तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ स्थूणां दिवस्तम्भनीं सूर्यमाहुरन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः अप्सु भूमीश्शिश्यिरे भूरिभाराः किं स्विन्महीरधितिष्ठन्त्याप इति ९ ते ह प्रत्यूचुस्स्थूणामेव दिवस्तम्भनीं सूर्यमाहुरन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः अप्सु भूमीश्शिश्यिरे भूरिभारास्सत्यम्महीरधितिष्ठन्त्याप इति १० ओमित्येतदेवाक्षरं सत्यं तदेतदापोऽधितिष्ठन्ति ११ १०

द्वितीयेऽनुवाके तृतीयः खराडः

द्वितीयोऽनुवाकस्समाप्तः

प्रजापतिः प्रजा असृजत ता एनं सृष्टा अन्नकाशिनीरभितस्समन्तम्पर्यविशन् १ ता अब्रवीत्किंकामास्स्थेति अन्नाद्यकामा इत्यब्रुवन् २ सोऽब्रवीदेकं वै वेदमन्नाद्यमसृक्षि सामैव तद्वः प्रयच्छानीति तन्नः प्रयच्छेत्यब्रुवन् ३ सोऽब्रवीदिमान्वै पशून्भूयिष्ठमुपजीवामः एभ्यः प्रथमम्प्रदास्यामीति ४ तेभ्यो हिङ्कारम्प्रायच्छत्तस्मात्पशवो हिङ्करिक्रतो विजिज्ञासमाना इव चरन्ति ५ प्रस्तावम्मनुष्येभ्यः तस्मादु ते स्तुवत इवेदम्मे भविष्यत्यदो मे भविष्यतीति ६ आदिं वयोभ्यः तस्मात्तान्याददानान्युपापपातमिव चरन्ति ७ उद्गीथं देवेभ्योऽमृतं तस्मात्तेऽमृताः ८ प्रतिहारमारण्येभ्यः पशुभ्यः तस्मात्ते प्रतिहतास्तन्तस्यमाना इव चरन्ति ९ ११

तृतीयेऽनुवाके प्रथमः खराडः

उपद्रवं गन्धर्वाप्सरोभ्यः तस्मात्त उपद्रवं गृह्णन्त इव चरन्ति १ निधनम्पितृभ्यः तस्मादु ते निधनसंस्थाः २ तद्यदेभ्यस्तत्साम प्रायच्छदेतमेवैभ्यस्तदादित्य-म्प्रायच्छत् ३ स यदनुदितस्स हिङ्कारोऽर्धोदितः प्रस्ताव आसंगवमादि-र्माध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारो यदुपास्तमयं लोहितायति स उपद्र-वोऽस्तमित एव निधनम् ४ स एष सर्वैर्लोकैस्समः तद्यदेष सर्वैर्लोकैस्स-मस्तस्मादेष एव साम स ह वै सामवित्स साम वेद य एवं वेद ५ तेऽब्रुवन्दूरे वा इदमस्मत्तत्रेदं कुरु यत्रोपजीवामेति ६ तदृतूनभ्यत्यनयत् स वसन्तमेव हिङ्कारमकरोद्ग्रीष्मम्प्रस्तावं वर्षामुद्गीथं शरदम्प्रतिहारं हेमन्तं निधनम्मासा-र्धमासावेव सप्तमावकरोत् ७ तेऽब्रुवन्नेदीयो न्वावैतर्हि तत्रैव कुरु यत्रोपजी-वामेति ८ तत्पर्जन्यमभ्यत्यनयत् स पुरोवातमेव हिङ्कारमकरोत् ९ १२

तृतीयेऽनुवाके द्वितीयः खगडः

जीमूतान्प्रस्तावं स्तनयित्नुमुद्गीथं विद्युतम्प्रतिहारं वृष्टिं निधनं यद्वृष्टात्प्र-जाश्चौषधयश्च जायन्ते ते सप्तम्यावकरोत् १ तेऽब्रुवन्नेदीयो न्वावैतर्हि तत्रैव कुरु यत्रोपजीवामेति २ तद्यज्ञमभ्यत्यनयत् स यजूंष्येव हिङ्कारमकरोदृचः प्रस्तावं सामान्युद्गीथं स्तोमम्प्रतिहारं छन्दो निधनं स्वाहाकारवषट्कारावेव सप्तमावकरोत् ३ तेऽब्रुवन्नेदीयो न्वावैतर्हि तत्रैव कुरु यत्रोपजीवामेति ४ तत्पुरुषमभ्यत्यनयत् स मन एव हिङ्कारमकरोद्वाचम्प्रस्तावम्प्राणमुद्गीथं चक्षुः प्रतिहारं श्रोत्रं निधनं रेतश्चैव प्रजां च सप्तमावकरोत् ५ तेऽब्रुवन्नत्र वा एन-त्तदकर्यत्रोपजीविष्याम इति ६ स विद्यादहमेव सामास्मि मय्येता देवता इति ७ १३

तृतीयेऽनुवाके तृतीयः खगडः

न ह दूरेदेवतस्स्यात् यावद्ध वा आत्मना देवानुपास्ते तावदस्मै देवा भवन्ति १ अथ य एतदेवं वेदाहमेव सामास्मि मय्येतास्सर्वा देवता इत्येवं हास्मि-न्नेतास्सर्वा देवता भवन्ति २ तदेतद्देवश्रुत्साम सर्वा ह वै देवताश्शृगव-न्त्येवंविदम्पुगयाय साधवे ता एनम्पुगयमेव साधु कारयन्ति ३ स ह स्माह सुचित्तश्शैलनो यो यज्ञकामो मामेव स वृणीतां तत एवैनं यज्ञ उपनंस्यति एवंविदं ह्युद्गायन्तं सर्वा देवता अनुसंतृप्यन्ति ता अस्मै तृप्तास्तथा करिष्यन्ति यथैनं यज्ञ उपनंस्यतीति ४ १४

तृतीयेऽनुवाके चतुर्थः खरडः
तृतीयोऽनुवाकस्समाप्तः

देवा वै स्वर्गं लोकमैप्सन्तं न शयाना नासीना न तिष्ठन्तो न धावन्तो नैव केन चन कर्मणाप्नुवन् १ ते देवाः प्रजापतिमुपाधावन्स्वर्गं वै लोकमैप्सिष्म तं न शयाना नासीना न तिष्ठन्तो न धावन्तो नैव केन चन कर्मणापाम तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयामेति २ तानब्रवीत्साम्नानृचेन स्वर्गं लोकम्प्रयातेति ते साम्नानृचेन स्वर्गं लोकम्प्रायन् ३ प्र वा इमे साम्नागुरिति तस्मात्प्रसाम तस्मादु प्रसाम्यन्नमत्ति ४ देवा वै स्वर्गं लोकमायन्त एता-न्यृक्पदानि शरीराणि धून्वन्त आयन्ते स्वर्गं लोकमजयन् ५ तान्या दिवः प्रकीर्णान्यशेरन् अथेमानि प्रजापतिर्ऋक्पदानि शरीराणि संचित्याभ्यर्चत् यदभ्यर्चत्ता एवर्चोऽभवन् ६ १५

चतुर्थेऽनुवाके प्रथमः खरडः

सैवर्गभवदियमेव श्रीः अतो देवा अभवन् १ अथैषामिमामसुराश्श्रियमवि-न्दन्त तदेवासुरमभवत् २ ते देवा अब्रुवन्या वै नश्श्रीरभूदविदन्त तामसुराः कथं न्वेषामिमां श्रियम्पुनरेव जायेमेति ३ तेऽब्रुवन्नृच्येव साम गायामेति ते पुनः प्रत्याद्रुत्यर्चि सामागायन्तेनास्माल्लोकादसुराननुदन्त ४ तद्वै माध्य-न्दिने च सवने तृतीयसवने च नर्चोऽपराधोऽस्ति स यत्ते ऋचि गायति तेना-स्माल्लोकाद्द्विषन्तम्भ्रातृव्यं नुदते अथ यदमृते देवतासु प्रातस्सवनं गायति तेन स्वर्गं लोकमेति ५ प्रजापतिर्वै साम्नेमां जितिमजयद्यास्येयं जितिस्तां स स्वर्गं लोकमारोहत् ६ ते देवाः प्रजापतिमुपेत्याब्रुवन्नस्मभ्यमपीदं साम प्रय-च्छेति तथेति तदेभ्यस्साम प्रायच्छत् ७ तदेनानिदं साम स्वर्गं लोकं ना-कामयत वोढुम् ८ ते देवाः प्रजापतिमुपेत्याब्रुवन्यद्वै नस्साम प्रादा इदं वै नस्तत्स्वर्गं लोकं न कामयते वोढुमिति ९ तद्वै पाप्मना संसृजतेति कोऽस्य पाप्मेति ऋगिति तदृचा समसृजन् १० तदिदम्प्रजापतेर्गर्हयमाणमतिष्ठदिदं वै मा तत्पाप्मना समस्राक्षुरिति सोऽब्रवीद्यस्त्वैतेन व्यावर्तयाद्व्येव स पाप्मना वर्ताता इति ११ स य एतदृचा प्रातस्सवने व्यावर्तयति व्येवं स पाप्मना वर्तते १२ १६

चतुर्थेऽनुवाके द्वितीयः खरडः

तदाहुर्यदोवा ओवा इति गीयते क्वात्रर्भवति क्व सामेति १ प्रस्तुवन्नेवा-ष्टाभिरक्षरैः प्रस्तौति अष्टाक्षरा गायत्री अक्षरमक्षरं त्र्यक्षरं तच्चतु-र्विंशतिस्सम्पद्यन्ते चतुर्विंशत्यक्षरा गायत्री २ तामेताम्प्रस्तावेनर्चमाप्त्वा या श्रीर्यापचितिर्यस्स्वर्गो लोको यद्यशो यदन्नाद्यं तान्यागायमान आस्ते ३ १७

चतुर्थेऽनुवाके तृतीयः खण्डः

प्रजापतिर्देवानसृजत तान्मृत्युः पाप्मान्वसृज्यत १ ते देवा प्रजापतिमुपेत्या-ब्रुवन्कस्मादु नोऽसृष्ठा मृत्युं चेन्नः पाप्मानमन्ववस्रक्ष्यन्नासिथेति २ तान-ब्रवीच्छन्दांसि सम्भरत तानि यथायतनम्प्रविशत ततो मृत्युना पाप्मना व्या-वर्त्स्यथेति ३ वसवो गायत्रीं समभरन्तां ते प्राविशन्तान्साच्छादयत् ४ रुद्रास्त्रिष्टुभं समभरन्तां ते प्राविशन्तान्साच्छादयत् ५ आदित्या जगतीं समभरन्तां ते प्राविशन्तान्साच्छादयत् ६ विश्वे देवा अनुष्टुभं समभरन्तां ते प्राविशन्तान्साच्छादयत् ७ तानस्यामृच्यस्वरायाम्मृत्युर्निरजानाद्यथा मणौ मणिसूत्रम्परिपश्येदेवम् ८ ते स्वरम्प्राविशन्तान्स्वरे सतो न निरजानात् स्वरस्य तु घोषेनान्वैत् ९ त ओमित्येतदेवाक्षरं समारोहनेतदेवाक्षरं त्रयी विद्या यददोऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त १० एवमेवैवं विद्वानोमित्येतदेवाक्षरं समारुह्य यददोऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्ततेऽथो यस्यैवं विद्वानुद्गायति ११ १८

चतुर्थेऽनुवाके चतुर्थः खण्डः

चतुर्थोऽनुवाकस्समाप्तः

अथैतदेकविंशं साम १ तस्य त्रय्येव विद्या हिङ्कारः अग्निर्वायुरसावादित्य एष प्रस्तावः इम एव लोका आदिः तेषु हीदं लोकेषु सर्वमाहितं श्रद्धा यज्ञो दक्षिणा एष उद्गीथः दिशोऽवान्तरदिश आकाश एष प्रतिहारः आपः प्रजा ओषधय एष उपद्रवः चन्द्रमा नक्षत्राणि पितर एतन्निधनम् २ तदेतदेकविंशं साम स य एवमेतदेकविंशं साम वेदैतेन हास्य सर्वेणोद्गीतम्भवत्येतस्माद्धेव सर्वस्मादावृश्च्यते य एवं विद्वांसमुपवदति ३ १९

पञ्चमोऽनुवाकस्समाप्तः

इदमेवेदमग्रेऽन्तरिक्षमासीत्तद्धेवाप्येतर्हि १ तद्यदेतदन्तरिक्षं य एवायम्पवत

एतदेवान्तरिक्षमेष ह वा अन्तरिक्षनाम २ एष उ एवैष विततः तद्यथा काष्ठेन पलाशे विष्कब्धे स्यातामक्षेण वा चक्रावेवमेतेनेमौ लोकौ विष्कब्धौ ३ तस्मिन्निदं सर्वमन्तः तद्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षमन्तर्यक्षं ह वै नामैतत्तदन्तरिक्षमिति परोक्षमाचक्षते ४ तद्यथा मूताः प्रबद्धाः प्रलम्बेरन्नेवं हैतस्मिन्सर्वे लोकाः प्रबद्धाः प्रलम्बन्ते ५ तस्यैतस्य साम्नस्तिस्र आगा-स्त्रीरयागीतानि षड्विभूतयश्चतस्रः प्रतिष्ठा दश प्रगास्सप्त संस्था द्वौ स्तोभावेकं रूपम् ६ तद्यास्तिस्र आगा इम एव ते लोकाः ७ अथ यानि त्रीरया-गीतान्यग्निर्वायुरसावादित्य एतान्यागीतानि न ह वै कां चन श्रियमपराध्नोति य एवं वेद ८ २०

षष्ठेऽनुवाके प्रथमः खरडः

अथ याष्षड्विभूतय ऋतवस्ते १ अथ याश्चतस्रः प्रतिष्ठा इमा एव ताश्चतस्रो दिशः २ अथ ये दश प्रगा इम एव ते दश प्राणाः ३ अथ यास्सप्त संस्था या एवैतास्सप्ताहोरात्राः प्राचीर्वषट्कुर्वन्ति ता एव ताः ४ अथ यौ द्वौ स्तोभावहोरात्रे एव ते ५ अथ यदेकमूपं कर्मैव तत् कर्मणा हीदं सर्वं विक्रियते ६ तस्यैतस्य साम्नो देवा आजिमायन्स प्रजापतिर्हरसा हिङ्कारमुदजय-दग्निस्तेजसा प्रस्तावं रूपेण बृहस्पतिरुद्गीथं स्वधया पितरः प्रतिहारं वीर्येणेन्द्रो निधनम् ७ अथेतरे देवा अन्तरिता इवासन्त इन्द्रमब्रुवन्तव वै वयं स्मोऽनु न एतस्मिन्सामन्नाभजेति ८ तेभ्यस्स्वरम्प्रायच्छत्तम्प्रजापतिरब्रवीत्कथेत्थ-मकः सर्वं वा एभ्यस्साम प्रादाः एतावद्वाव साम यावान्स्वरः ऋग्वा एषर्ते स्वराद्भवतीति ९ सोऽब्रवीत्पुनर्वा अहमेषामेतं रसमादास्य इति तानब्रवीदुप मा गायत अभि मा स्वरतेति तथेति १० तमुपागायन्तमभ्यस्वरं तेषाम्पुना रसमादत्त ११ २१

षष्ठेऽनुवाके द्वितीयः खरडः

स यथा मधुधाने मधुनाळीभिर्मध्वासिञ्चादेवमेव तत्सामन्पुना रसमासिञ्चत् १ तस्मादु ह नोपगायेत् इन्द्र एष यदुद्गाता स यथासावमीषां रसमादत्त एवमेष तेषां रसमादत्ते २ कामं ह तु यजमान उपगायेद्यजमानस्य हि तद्भवत्यथो ब्रह्मचार्याचार्योक्तः ३ तदु वा आहुरुपैव गायेत् दिशो ह्युपागायन्दिशामेवं सलोकतां जयतीति ४ ते य एवेमे मुख्याः प्राणा एत एवोद्गातारश्चोपगातारश्च

इमे ह त्रय उद्गातार इम उ चत्वार उपगातारः ५ तस्मादु चतुर एवोपगातॄ-
न्कुर्वीत तस्मादु होपगातॄन्प्रत्यभिमृशेद्दिशस्स्थ श्रोत्रम्मे मा हिंसिष्टेति ६ स
यस्स रस आसीद्य एवायम्पवत एष एव स रसः ७ स यथा मध्वालोप-
मद्यादिति ह स्माह सुचित्तश्शैलन एवमेतस्य रसस्यात्मानम्पूरयेत स
एवोद्गातात्मानं च यजमानं चामृतत्वं गमयतीति ८ २२

षष्ठेऽनुवाके तृतीयः खराडः

षष्ठोऽनुवाकस्समाप्तः

अयमेवेदमग्र आकाश आसीत् स उ एवाप्येतर्हि १ स यस्स आकाशो वागेव
सा तस्मादाकाशाद्वाग्वदति २ तामेतां वाचम्प्रजापतिरभ्यपीळयत्तस्या
अभिपीळितायै रसः प्राणेदत्त एवेमे लोका अभवन् ३ स इमांल्लोकान-
भ्यपीळयत्तेषामभिपीळितानां रसः प्राणेदत्ता एवैता देवता अभवन्नग्निर्वा-
युरसावादित्य इति ४ स एता देवता अभ्यपीळयत्तासामभिपीळितानां रसः
प्राणेदत् सा त्रयी विद्याभवत् ५ स त्रयीं विद्यामभ्यपीळयत्तस्या अभिपीळितायै
रसः प्राणेदत्ता एवैता व्याहृतयोऽभवन्भूर्भुवस्स्वरिति ६ स एता व्याहृती-
रभ्यपीळयत्तासामभिपीळितानां रसः प्राणेदत्तदेतदक्षरमभवदोमिति यदेतत् ७
स एतदक्षरमभ्यपीळयत्तस्याभिपीळितस्य रसः प्राणेदत् ८ २३

सप्तमेऽनुवाके प्रथमः खराडः

तदक्षरदेव यदक्षरदेव तस्मादक्षरम् १ यद्वेवाक्षरं नाक्षीयत तस्मादक्षयमक्षयं
ह वै नामैतत्तदक्षरमिति परोक्षमाचक्षते २ तद्धैतदेक ओमिति गायन्ति तत्तथा
न गायेत् ईश्वरो हैनदेतेन रसेनान्तर्धातोः अथो द्वे इवैवम्भवत ओमिति ओ इत्यु
हैके गायन्ति तदु ह तन्न गीतं नैव तथा गायेत् ओं इत्येव गायेत्तदेनदेतेन रसेन
संदधाति ३ तदेतं रसं तर्पयति रसस्तृप्तोऽक्षरं तर्पयति अक्षरं तृप्तं व्याहृती-
स्तर्पयति व्याहृतयस्तृप्ता वेदांस्तर्पयन्ति वेदास्तृप्ता देवतास्तर्पयन्ति देवतास्तृप्ता
लोकांस्तर्पयन्ति लोकास्तृप्ता अक्षरं तर्पयन्ति अक्षरं तृप्तं वाचं तर्पयति
वाक्तृप्ताकाशं तर्पयति आकाशस्तृप्तः प्रजास्तर्पयति तृप्यति प्रजया पशुभिर्य
एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ४ २४

सप्तमेऽनुवाके द्वितीयः खराडः

सप्तमोऽनुवाकस्समाप्तः

अयमेवेदमग्र आकाश आसीत् स उ एवाप्येतर्हि १ स यस्स आकाश आदित्य एव स एतस्मिन्ह्युदिते सर्वमिदमाकाशते २ तस्य मर्त्यामृतयोर्वै तीराणि समुद्र एव तद्यत्समुद्रेण परिगृहीतं तन्मृत्योराप्तमथ यत्परं तदमृतम् ३ स यो ह स समुद्रो य एवायम्पवत एष एव स समुद्रः एतं हि संद्रवन्तं सर्वाणि भूतान्यनुसंद्रवन्ति ४ तस्य द्यावापृथिवी एव रोधसी अथ यथा नद्यां कंसानि वा प्रहीणानि स्युस्सरांसि वैवमस्यायम्पार्थिवस्समुद्रः ५ स एष पार एव समुद्रस्योदेति स उद्यन्नेव वायोः पृष्ठ आक्रमते सोऽमृतादेवोदेति अमृतम-नुसंचरति अमृते प्रतिष्ठितः ६ तस्यैतत्त्रिवृद्रूपम्मृत्योरनाप्तं शुक्लं कृष्णम्पुरुषः ७ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः सा या सा वागृक्सा अथ यो-ऽग्निर्मृत्युस्सः ८ अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः तद्यास्ता आपोऽन्नं तदथ यन्मनो यजुष्टत् ९ अथ यः पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतं स यः प्राणस्तत्साम अथ यद्ब्रह्म तदमृतम् १० २५

अष्टमेऽनुवाके प्रथमः खगडः

अथाध्यात्ममिदमेव चक्षुस्त्रिवृच्छुक्लं कृष्णम्पुरुषः १ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः सा या सा वागृक्सा अथ योऽग्निर्मृत्युस्सः २ अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः तद्यास्ता आपोऽन्नं तत् अथ यन्मनो यजुष्टत् ३ अथ यः पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतं स यः प्राणस्तत्साम अथ यद्ब्रह्म तदमृतम् ४ सैषोत्क्रान्तिर्ब्रह्मणः अथातः पराक्रान्तिः ५ सा या साक्रा-न्तिर्विद्युदेव सा स यदेव विद्युतो विद्योतमानायै श्येतं रूपम्भवति तद्वाचो रूपमृचोऽग्नेर्मृत्योः ६ यद्वेव विद्युतस्संद्रवन्त्यै नीळं रूपम्भवति तदपां रूपम-न्नस्य मनसो यजुषः ७ य एवैष विद्युति पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतं स यः प्राणस्तत्साम अथ यद्ब्रह्म तदमृतम् ८ २६

अष्टमेऽनुवाके द्वितीयः खगडः

स हैषोऽमृतेन परिवृढो मृत्युमध्यास्तेऽन्नं कृत्वा १ अथैष एव पुरुषो योऽयं चक्षुषि य आदित्ये सोऽतिपुरुषः यो विद्युति स परमपुरुषः २ एते ह वाव त्रयः पुरुषाः आ हास्यैते जायन्ते ३ स योऽयं चक्षुष्येषोऽनुरूपो नाम अन्वङ्ह्येष सर्वाणि रूपाणि तमनुरूप इत्युपासीत अन्वञ्चि हैनं सर्वाणि रूपाणि भवन्ति ४ य आदित्ये स प्रतिरूपः प्रत्यङ्ह्येष सर्वाणि रूपाणि तम्प्रतिरूप इत्युपासीत

प्रत्यञ्चि हैनं सर्वाणि रूपाणि भवन्ति ५ यो विद्युति स सर्वरूपः सर्वाणि ह्येतस्मिन्नूपाणि तं सर्वरूप इत्युपासीत सर्वाणि हास्मिन्नूपाणि भवन्ति ६ एते ह वाव त्रयः पुरुषाः आ हास्यैते जायन्ते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ७ २७

अष्टमेऽनुवाके तृतीयः खराडः

अष्टमोऽनुवाकस्समाप्तः

अयमेवेदमग्र आकाश आसीत् स उ एवाप्येतर्हि १ स यस्स आकाश इन्द्र एव सः स यस्स इन्द्र एष एव स य एष एव तपति स एष सप्तरश्मि-र्वृषभस्तुविष्मान् २ तस्य वाङ्मयो रश्मिः प्राङ्प्रतिष्ठितः सा या सा वागग्निस्सः स दशधा भवति शतधा सहस्रधायुतधा प्रयुतधा नियुतधार्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः ३ स एष एतस्य रश्मिर्वाग्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्च वदत्येतस्यैव रश्मिना वदति ४ अथ मनो-मयो दक्षिणा प्रतिष्ठितः तद्यत्तन्मनश्चन्द्रमास्सः स दशधा भवति ५ स एष एतस्य रश्मिर्मनो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्च मनुत एतस्यैव रश्मिना मनुते ६ अथ चक्षुर्मयः प्रत्यङ्प्रतिष्ठितः तद्यत्तच्चक्षुरादि-त्यस्सः स दशधा भवति ७ स एष एतस्य रश्मिश्चक्षुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्च पश्यत्येतस्यैव रश्मिना पश्यति ८ अथ श्रोत्रमय उदङ्प्रतिष्ठितः तद्यत्तच्छ्रोत्रं दिशस्ताः स दशधा भवति ९ स एश एतस्य रश्मिश्श्रोत्रम्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्च शृणोत्येतस्यैव रश्मिना शृणोति १० २८

नवमेऽनुवाके प्रथमः खराडः

अथ प्राणमय ऊर्ध्वः प्रतिष्ठितः स यस्स प्राणो वायुस्सः स दशधा भवति १ स एष एतस्य रश्मिः प्राणो भूवा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्च प्राणित्येतस्यैव रश्मिना प्राणिति २ अथासुमयस्तिर्यङ्प्रतिष्ठितः स ह स ईशानो नाम स दशधा भवति ३ स एष एतस्य रश्मिरसुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्चासुमानेतस्यैव रश्मिनासुमान् ४ अथान्न-मयोऽर्वाङ्प्रतिष्ठितः तद्यत्तदन्नमापस्ताः स दशधा भवति शतधा सहस्र-धायुतधा प्रयुतधा नियुतधार्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः

५ स एष एतस्य रश्मिरन्नम्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः स यः कश्चाश्नात्येतस्यैव रश्मिनाश्नाति ६ स एष सप्तरश्मिर्वृषभस्तुविष्मान्तदेत-दृचाभ्यनूच्यते यस्सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून्यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्र इति ७ यस्सप्तरश्मिरिति सप्त ह्येत आदित्यस्य रश्मयः वृषभ इति एष ह्येवासाम्प्रजानामृषभः तुवि-ष्मानिति महीयैवास्यैषा ८ अवासृजत्सर्तवे सप्त सिन्धूनिति सप्त ह्येते सिन्धवः तैरिदं सर्वं सितं तद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः ९ यो रौ-हिणमस्फुरद्वज्रबाहुरिति एष हि रौहिणमस्फुरद्वज्रबाहुः १० द्यामारोहन्तं स जनास इन्द्र इति एष हीन्द्रः ११ २९

नवमेऽनुवाके द्वितीयः खगडः

तद्यथा गिरिम्पन्थानस्समुदियुरिति ह स्माह शाट्यायनिरेवमेत आदित्यस्य रश्मय एतमादित्यं सर्वतोऽपियन्ति स हैवं विद्वानोमित्याददान एतैरेतस्य रश्मिभिरेतमादित्यं सर्वतोऽप्येति १ तदेतत्सर्वतोद्वारमनिषेधं साम अन्यतोद्वारं हैनदेक एवाभ्रंगमुपासते अतोऽन्यथा विद्युः २ अथ य एतदेवं वेद स एवैत-त्सर्वतोद्वारमनिषेधं साम वेद ३ सा एषा विद्युत् यदेतन्मगडलं समन्त-म्परिपतति तत्साम अथ यत्परमतिभाति स पुगयकृत्यायै रसः तमभ्यतिमुच्यते ४ तदेतदभ्रातृव्यं साम न ह वा इन्द्रः कं चन भ्रातृव्यम्पश्यते स यथेन्द्रो न कं चन भ्रातृव्यम्पश्यत एवमेव न कं चन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ५ ३०

नवमेऽनुवाके तृतीयः खगडः

नवमोऽनुवाकस्समाप्तः

अयमेवेदमग्र आकाश आसीत् स उ एवाप्येतर्हि स यस्स आकाश इन्द्र एव सः स यस्स इन्द्रस्सामैव तत् १ तास्यैतस्य साम्न इयमेव प्राची दिग्घिङ्कार इयम्प्रस्ताव इयमादिरियमुद्गीथोऽसौ प्रतिहारोऽन्तरिक्षमुपद्रव इयमेव निधनम् २ तदेतत्सप्तविधं साम स य एवमेतत्सप्तविधं साम वेद यत्किं च प्राच्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं हिङ्कारेणाप्नोति ३ अथ यद्दक्षिणायं दिशि तत्सर्वम्प्रस्तावेनाप्नोति ४ अथ यत्प्रतीच्यां दिशि तत्स-र्वमादिनाप्नोति ५ अथ यदुदीच्यां दिशि तत्सर्वमुद्गीथेनाप्नोति ६ अथ यद-

मुष्यां दिशि तत्सर्वम्प्रतिहारेणाप्नोति ७ अथ यदन्तरिक्षे तत्सर्वमुपद्रवेणाप्नोति ८ अथ यदस्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं निधनेनाप्नोति ९ सर्वं हैवास्याप्तम्भवति सर्वं जितं न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद १० स यद्ध किं च किं चैवं विद्वानेषु लोकेषु कुरुते स्वस्य हैव तत्स्वतः कुरुते तदेतदृचाभ्यनूच्यते ११ ३१

दशमेऽनुवाके प्रथमः खण्डः

यद्द्याव इन्द्र ते शतं शतम्भूमीरुत स्युः न त्वा वज्रिन्त्सहस्त्रं सूर्या अनु न जातमष्ट रोदसी इति १ यद्द्याव इन्द्र ते शतं शतम्भूमीरुत स्युरिति यच्छतं द्यावस्स्युश्शतम्भूम्यस्ताभ्य एष एवाकाशो ज्यायान् २ न त्वा वज्रिन्त्सहस्त्रं सूर्या अन्विति न ह्येतं सहस्त्रं चन सूर्या अनु ३ न जातमष्ट रोदसी इति न ह्येतं जातं रोदन्ति इमे ह वाव रोदसी ताभ्यामेष एवाकाशो ज्यायानेतस्मि-न्ह्येवैते अन्तः ४ स यस्स आकाश इन्द्र एव सः स यस्स इन्द्र एष एव स य एष तपति ५ स एषोऽभ्रारयतिमुच्यमान एति तद्यथैषोऽभ्रारयतिमुच्यमान एत्येवमेव स सर्वस्मात्पाप्मनोऽतिमुच्यमान एति य एवं वेदाथो यस्यैवं विद्वानुद्गायति ६ ३२

दशमेऽनुवाके द्वितीयः खण्डः

दशमोऽनुवाकस्समाप्तः

त्रिवृत्साम चतुष्पात् ब्रह्म तृतीयमिन्द्रस्तृतीयम्प्रजापतिस्तृतीयमन्नमेव चतुर्थः पादः १ तद्यद्वै ब्रह्म स प्राणोऽथ य इन्द्रस्सा वागथ यः प्रजापतिस्तन्मनोऽन्नमेव चतुर्थः पादः २ मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथोऽन्नमेव चतुर्थः पादः ३ करोत्येव वाचा नयति प्राणेन गमयति मनसा तदेतन्निरुद्धं यन्मनः तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ४ अथाधिदैवतं चन्द्रमा एव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथ आप एव चतुर्थः पादः तद्धि प्रत्य-क्षमन्नम् ५ ता वा एता देवता अमावास्यां रात्रिं संयन्ति चन्द्रमा अमावास्यां रात्रिमादित्यम्प्रविशत्यादित्योऽग्निम् ६ तद्यत्संयन्ति तस्मात्साम स ह वै सामवित्स साम वेद य एवं वेद ७ तासां वा एतासां देवतानामेकैकैव देवता साम भवति ८ एष एवादित्यस्त्रिवृच्चतुष्पाद्रश्मयो मण्डलम्पुरुषः रश्मय एव हिङ्कारः तस्मात्ते प्रथमत एवोद्यतस्तायन्ते मण्डलम्प्रस्तावः पुरुष

उद्गीथो या एता ग्रापोऽन्तस्स एव चतुर्थः पादः ९ एवमेव चन्द्रमसो रश्मयो मगडलम्पुरुषः रश्मय एव हिङ्कारो मगडलम्प्रस्तावः पुरुष उद्गीथो या एता ग्रापोऽन्तस्स एव चतुर्थः पादः १० चत्वार्यन्यानि चत्वार्यन्यानि तान्यष्टौ ग्रष्टाक्षरा गायत्री गायत्रं साम ब्रह्म उ गायत्री तदु ब्रह्माभिसम्पद्यते ग्रष्टाशफाः पशवस्तेनो पशव्यम् ११ ३३

एकादशेऽनुवाके प्रथमः खगडः

ग्रथाध्यात्ममिदमेव चक्षुस्त्रिवृच्चतुष्पाच्छुक्लं कृष्णम्पुरुषः शुक्लमेव हिङ्कारः कृष्णम्प्रस्तावः पुरुष उद्गीथो या इमा ग्रापोऽन्तस्स एव चतुर्थः पादः १ इदमादित्यस्यायनमिदं चन्द्रमसः चत्वारीमानि चत्वारीमानि तान्यष्टौ ग्रष्टा-क्षरा गायत्री गायत्रं साम ब्रह्म उ गायत्री तदु ब्रह्माभिसम्पद्यते ग्रष्टाशफाः पशवस्तेनो पशव्यम् २ स योऽयम्पवते स एष एव प्रजापतिः तद्वेव साम तस्यायं देवो योऽयं चक्षुषि पुरुषः स एष ग्राहुतिमतिमत्योत्क्रान्तः ३ ग्रथ यावेतौ चन्द्रमाश्चादित्यश्च यावेतावप्सु दृश्येते एतावेतयोर्देवौ ४ यद्ध वा इदमाहुर्देवानां देवा इत्येते ह ते त एत ग्राहुतिमतिमत्योत्क्रान्ताः ५ तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशस्समीचीः य ग्राहुतीरत्यमन्यन्त देवा ग्रपां नेतारः कतमे त ग्रासन्निति ६ ते ह प्रत्यूचुरिमामेषाम्पृथिवीं वस्त एकोऽन्तरिक्षम्पर्येको बभूव दिवमेको ददते यो विधर्ता विश्वा ग्राशाः प्रतिरक्षन्त्यन्य इति ७ इमामेषाम्पृथिवीं वस्त एक इत्यग्निर्ह सः ८ ग्रन्तरिक्षम्पर्येको बभूवेति वायुर्ह सः ९ दिवमेको ददते यो विधर्तेत्यादित्यो ह सः १० विश्वा ग्राशाः प्रतिरक्षन्त्यन्य इति एता ह वै देवता विश्वा ग्राशाः प्रतिरक्षन्ति चन्द्रमा नक्षत्राणीति ता एतास्सामैव सत्यो व्यूढो ग्रन्नाद्याय ११ ३४

एकादशेऽनुवाके द्वितीयः खगडः

एकादशोऽनुवाकस्समाप्तः

ग्रथैतत्साम तदाहुस्संवत्सर एव सामेति १ तस्य वसन्त एव हिङ्कारः तस्मा-त्पशवो वसन्ता हिङ्करिक्रतस्समुदायन्ति २ ग्रीष्मः प्रस्तावः ग्रनिरुक्तो वै प्रस्तावोऽनिरुक्त ऋतूनां ग्रीष्मः ३ वर्षा उद्गीथः उदिव वै वर्षं गायति ४ शरत्प्रतिहारः शरदि ह खलु वै भूयिष्ठा ग्रोषधयः पच्यन्ते ५ हेमन्तो निधनं

निधनकृता इव वै हेमन्प्रजा भवन्ति ६ तावेतावन्तौ संधत्तः एतदन्वनन्त-स्संवत्सरः तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च एतदनु ग्रामस्यान्तौ समेतः एतदनु निष्कस्यान्तौ समेतः एतदन्वहिर्भोगान्पर्याहृत्य शये ७ तद्यथा ह वै निष्क-स्समन्तं ग्रीवा अभिपर्यक्त एवमनन्तं साम स य एवमेतदनन्तं साम वेदा-नन्ततामेव जयति ८ ३५

द्वादशेऽनुवाके प्रथमः खण्डः

अथैतत्पर्जन्ये साम तस्य पुरोवात एव हिङ्कारः अथ यदभ्राणि सम्प्लावयति स प्रस्तावः अथ यत्स्तनयति स उद्गीथः अथ यद्विद्योतते स प्रतिहारः अथ यद्वर्षति तन्निधनम् १ तदेतत्पर्जन्ये साम स य एवमेतत्पर्जन्ये साम वेद वर्षुको हास्मै पर्जन्यो भवति २ अथैतत्पुरुषे साम तस्यायमेव हिङ्कारोऽयम्प्रस्ता-वोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनम् ३ तदेतत्पुरुषे साम स य एवमेतत्पुरुषे साम वेदोर्ध्व एव प्रजया पशुभिरारोहन्नेति ४ य उ एनत्प्रत्यग्वेद ये प्रत्यञ्चो लोकास्ताञ्जयति तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनं ये प्रत्यञ्चो लोकास्ताञ्जयति ५ य उ एनत्तिर्यग्वेद ये तिर्यञ्चो लोका-स्ताञ्जयति तस्य लोमैव हिङ्कारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनम् ६ तस्य त्रीण्याविर्गायति प्रस्तावम्प्रतिहारं निधनं तस्मात्पुरुषस्य त्रीण्यस्थीन्याविर्दन्ताश्च द्वयाश्च नखाः ये तिर्यञ्चो लोकास्ताञ्जयति ७ य उ एनत्सम्यग्वेद ये सम्यञ्चो लोकास्ताञ्जयति तस्य मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथश्चक्षुः प्रतिहारश्श्रोत्रंनिधनं ये सम्यञ्चो लोकास्ताञ्जयति ८ अथै-तद्देवतासु साम तस्य वायुरेव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथश्चन्द्रमा प्रतिहारो दिश एव निधनम् ९ तदेतद्देवतासु साम स य एवमेतद्देवतासु साम वेद देवतानामेव सलोकतां जयति १० ३६

द्वादशेऽनुवाके द्वितीयः खण्डः

तस्यैतास्तिस्त्र आगा आग्नेय्यैकैन्द्र्येका वैश्वदेव्येका १ सा या मन्द्रा साग्नेयी तया प्रातस्सवनस्योद्गेयमाग्नेयं वै प्रातस्सवनमाग्नेयोऽयं लोकः स्वयागया प्रातस्सवनस्योद्गायत्यृध्नोतीमं लोकम् २ अथ या घोषिण्युपब्दिमती सैन्द्री तया माध्यन्दिनस्य सवनस्योद्गेयमैन्द्रं वै माध्यन्दिनं सवनमैन्द्रोऽसौ लोकः स्वयागया माध्यन्दिनस्य सवनस्योद्गायत्यृध्नोत्यमुं लोकम् ३ अथ यां वीङ्ख्य-

न्निव प्रथयन्निव गायति सा वैश्वदेवी तया तृतीयसवनस्योद्गेयं वैश्वदेवं वै तृतीयसवनं वैश्वदेवोऽयमन्तरालोकः स्वयागया तृतीयसवनस्योद्गायत्यृध्नो-तीममन्तरालोकम् ४ अथो उच्चा खल्वाहुरेकयैवागयोद्गेयं यदेवास्य मध्यं वाच इति तद्यया वै वाचा व्यायच्छमान उद्गायति तदेवास्य मध्यं वाचः तया वा एतया वाचा सर्वा वाच उपगच्छति अव्यासिक्तामेकस्थां श्रियमृध्नोति य एवं वेद ५ अथ या क्रौञ्चा सा बार्हस्पत्या स यो ब्रह्मवर्चसकामस्स्यात्स तयोद्गायेत्तद्ब्रह्म वै बृहस्पतिः तद्वै ब्रह्मवर्चसमृध्नोति तथा ह ब्रह्मवर्चसी भवति ६ अथ ह चैकितानेय एकस्यैव साम्न आगां गायति गायत्रस्यैव तदनवानं गेयं तत्साम्न एवा प्रतिहारादनवानं गेयं तत्प्राणो वै गायत्रं तद्वै प्राणमृध्नोति तथा ह सर्वमायुरेति ७ ३७

द्वादशेऽनुवाके द्वितीयः खण्डः

अथ ह ब्रह्मदत्तं चैकितानेयमुद्गायन्तं कुरव उपोदुरुज्जहिहि साम दाल्भ्येति १ स होपोद्यमानो नितरां जगौ तं होचुः किमुपोद्यमानो नितरामगासीरिति २ स होवाचेदं वै लोमेत्येतदेवैतत्प्रत्युपश्शृण्मः तस्मादु ये न एतदुपावादिषुर्लोम-शानीव तेषां श्मशानानि भवितारः अथ वयमुदेव गातारस्स्म इति ३ अथ ह राजा जैवलिर्गळूनसमार्त्ताकायणं शामूलपर्णाभ्यामुत्थितम्पप्रच्छर्चागाता शालावत्या३ साम्ना३ इति ४ नैव राजन्नृचेति होवाच न साम्नेति तद्यूयं तर्हि सर्व एव पणाय्या भविष्यथ य एवं विद्वांसोऽगायतेति ५ अथ यद्धावद्व्यदृचा च साम्ना चागामेति धीतेन वै तद्यातयाम्नामलाकाण्डेनागातेति हैनांस्तदव-द्व्यत्तद्ध तदुवाच स्वरेण चैव हिङ्कारेण चागामेति ६ ३८

द्वादशेऽनुवाके तृतीयः खण्डः

अथ ह सत्याधिवाकश्चैत्ररथिस्सत्ययज्ञम्पौलुषितमुवाच प्राचीनयोगेति मम चेद्वै त्वं साम विद्वान्साम्नार्त्विज्यं करिष्यसि नैव तर्हि पुनर्दीक्षामभिध्यातासीति मुहुर्दीक्षी ह्यास १ स होवाच यो वै साम्नश्श्रियं विद्वान्साम्नार्त्विज्यं करोति श्रीमानेव भवति मनो वाव साम्नश्श्रीरिति २ यो वै साम्नः प्रतिष्ठां विद्वान्साम्नार्त्विज्यं करोति प्रत्येव तिष्ठति वाग्वाव साम्नः प्रतिष्ठेति ३ यो वै साम्नस्सुवर्णं विद्वान्साम्नार्त्विज्यं करोत्यध्यस्य गृहे सुवर्णं गम्यते प्राणो वाव साम्नस्सुवर्णमिति ४ यो वै साम्नोऽपचितिं विद्वान्साम्नार्त्विज्यं करोत्यपचि-

तिमानेव भवति चक्षुर्वाव साम्नोऽपचितिरिति ५ यो वै साम्नश्श्रुतिं विद्वा-न्साम्नार्त्विज्यं करोति श्रुतिमानेव भवति श्रोत्रं वाव साम्नश्श्रुतिरिति ६ ३९

द्वादशेऽनुवाके चतुर्थः खगडः

द्वादशोऽनुवाकस्समाप्तः

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति १ वागेव साम वाचा हि साम गायति वागेवोक्थं वाचा ह्युक्थं शंसति वागेव यजुः वाचा हि यजुरनुवर्तते २ तद्यत्किं चार्वाचीनम्ब्रह्मणस्तद्वागेव सर्वमथ यदन्यत्र ब्रह्मो-पदिश्यते नैव हि तेनार्त्विज्यं करोति परोक्षेणैव तु कृतम्भवति ३ तस्या एतस्यै वाचो मनः पादश्चक्षुः पादश्श्रोत्रम्पादो वागेव चतुर्थः पादः ४ तद्यद्वै मनसा ध्यायति तद्वाचा वदति यच्चक्षुषा पश्यति तद्वाचा वदति यच्छ्रोत्रेण शृणोति तद्वाचा वदति ५ तद्यदेतत्सर्वं वाचमेवाभिसमयति तस्माद्वागेव साम स ह वै सामवित्स साम वेद य एवं वेद ६ तस्या एतस्यै वाचः प्राणा एवासुः एषु हीदं सर्वमसूतेति ७ ४०

त्रयोदशेऽनुवाके प्रथमः खगडः

तेन हैतेनासुना देवा जीवन्ति पितरो जीवन्ति मनुष्या जीवन्ति पशवो जीवन्ति गन्धर्वाप्सरसो जीवन्ति सर्वमिदं जीवति १ तदाहुर्यदसुनेदं सर्वं जीवति कस्साम्नोऽसुरिति प्राण इति ब्रूयात् प्राणो ह वाव साम्नोऽसुः २ स एष प्राणो वाचि प्रतिष्ठितो वागु प्राणे प्रतिष्ठिता तावेतावेवमन्योऽन्यस्मिन्प्रतिष्ठितौ प्रतितिष्ठति य एवं वेद ३ तदेतदृचाभ्यनूच्यतेऽदितिर्द्यौरदितिरन्तरिक्षमदि-तिर्माता स पिता स पुत्रः विश्वे देवा अदितिः पञ्च जना अदितिर्जात-मदितिर्जनित्वमिति ४ अदितिर्द्यौरदितिरन्तरिक्षमिति एषा वै द्यौरेषान्तरिक्षम् ५ अदितिर्माता स पिता स पुत्र इति एषा वै मातैषा पितैषा पुत्रः ६ विश्वे देवा अदितिः पञ्च जना इति ये देवा असुरेभ्यः पूर्वे पञ्च जना आसन्य एवा-सावादित्ये पुरुषो यश्चन्द्रमसि यो विद्युति योऽप्सु योऽयमक्षन्नन्तरेष एव ते तदे-षैव ७ अदितिर्जातमदितिर्जनित्वमिति एषा ह्येव जातमेषा जनित्वम् ८ ४१

त्रयोदशेऽनुवाके द्वितीयः खगडः

त्रयोदशोऽनुवाकस्समाप्तः

आरुणिर्ह वासिष्ठं चैकितानेयम्ब्रह्मचर्यमुपेयाय तं होवाचाजानासि सौम्य गौतम यदिदं वयं चैकितानेयास्सामैवोपास्महे कां त्वं देवतामुपास्स इति सामैव भगवन्त इति होवाच १ तं ह पप्रच्छ यदग्नौ तद्वेत्था३ इति ज्योतिर्वा एतत्तस्य साम्नो यद्वयं सामोपास्मह इति २ यत्पृथिव्यां तद्वेत्था३ इति प्रतिष्ठा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ३ यदप्सु तद्वेत्था३ इति शान्तिर्वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ४ यदन्तरिक्षे तद्वेत्था३ इति आत्मा वा एष तस्य साम्नो यद्वयं सामोपास्मह इति ५ यद्वायौ तद्वेत्था३ इति श्रीर्वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ६ यद्दिक्षु तद्वेत्था३ इति व्याप्तिर्वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ७ यद्दिवि तद्वेत्था३ इति विभूतिर्वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ८ ४२

चतुर्दशेऽनुवाके प्रथमः खगडः

यदादित्ये तद्वेत्था३ इति तेजो वा एतत्तस्य साम्नो यद्वयं सामोपास्मह इति १ यच्चन्द्रमसि तद्वेत्था३ इति भा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति २ यन्नक्षत्रेषु तद्वेत्था३ इति प्रज्ञा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ३ यदन्ने तद्वेत्था३ इति रेतो वा एतत्तस्य साम्नो यद्वयं सामोपास्मह इति ४ यत्पशुषु तद्वेत्था३ इति यशो वा एतत्तस्य साम्नो यद्वयं सामोपास्मह इति ५ यदृचि तद्वेत्था३ इति स्तोमो वा एष तस्य साम्नो यद्वयं सामोपास्मह इति ६ यद्यजुषि तद्वेत्था३ इति कर्म वा एतत्तस्य साम्नो यद्वयं सामोपास्मह इति ७ अथ कि-मुपास्स इति अक्षरमिति कतमत्तदक्षरमिति यत्क्षरन्नाक्षीयतेति कतम-त्तत्क्षरन्नाक्षीयतेति इन्द्र इति ८ कतमस्स इन्द्र इति योऽक्षन्रमत इति कतमस्स योऽक्षन्रमत इति इयं देवतेति होवाच ९ योऽयं चक्षुषि पुरुष एष इन्द्र एष प्रजापतिः स समः पृथिव्या सम आकाशेन समो दिवा समस्सर्वेण भूतेन एष परो दिवो दीप्यते एष एवेदं सर्वमित्युपासितव्यः १० स य एतदेवं वेद ज्योतिष्मान्प्रतिष्ठावाञ्छान्तिमानात्मवाञ्छ्रीमान्व्याप्तिमान्विभूतिमांस्तेजस्वी भावान्प्रज्ञावान्रेतस्वी यशस्वी स्तोमवान्कर्मवानक्षरवानिन्द्रियवान्सामन्वी भवति ११ तद्वेतदृचाभ्यनूच्यते १२ ४३

चतुर्दशमेऽनुवाके द्वितीयः खगडः

रूपंरूपम्प्रतिरूपो बभूव तदस्य रूपम्प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शता दशेति १ रूपंरूपम्प्रतिरूपो बभूवेति रूपंरूपं ह्येष प्रतिरूपो बभूव २ तदस्य रूपम्प्रतिचक्षणायेति प्रतिचक्षणाय हास्यैतद्रूपम् ३ इन्द्रो मायाभिः पुरुरूप ईयत इति मायाभिर्ह्येष एतत्पुरुरूप ईयते ४ युक्ता ह्यस्य हरयश्शता दशेति सहस्रं हैत आदित्यस्य रश्मयः तेऽस्य युक्तास्तैरिदं सर्वं हरति तद्यदेतैरिदं सर्वं हरति तस्माद्धरयः ५ रूपंरूपम्मघवा बोभवीति मायाः कृणवानः परि तन्वं स्वां त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावेति ६ रूपंरूपम्मघवा बोभवीतीति रूपंरूपं ह्येष मघवा बोभवीति ७ मायाः कृणवानः परि तन्वं स्वामिति मायाभिर्ह्येष एतत्स्वां तनुं गोपायति ८ त्रिर्यद्दिवः परि मुहूर्तमागादिति त्रिर्ह वा एष एतस्य मुहूर्तस्येमाम्पृथिवीं समन्तः पर्येतीमाः प्रजास्संचक्षाणः ९ स्वैर्मन्त्रैरनृतुपा ऋतावेति अनृतुपा ह्येष एतदृतावा १० ४४

चतुर्दशेऽनुवाके तृतीयः खगडः

तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छे इन्द्रमुक्थमृचमुद्गीथमाहुर्ब्रह्म साम प्राणं व्यानम्मनो वा चक्षुरपानमाहुश्श्रोत्रं श्रोत्रिया बहुधा वदन्तीति १ ते प्रत्यूचुर्ऋषय एते मन्त्रकृतः पुराजाः पुनराजायन्ते वेदानां गुप्त्यै कं ते वै विद्वांसो वैन्य तद्वदन्ति समानम्पुरुषम्बहुधा निविष्टमिति २ इमां ह वा तद्देवतां त्रय्यां विद्यायामिमां समानामभ्येक आपयन्ति नैके यो ह वावैतदेवं वेद स एवैतां देवतां सम्प्रति वेद ३ स एष इन्द्र उद्गीथः स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄणां च विज्ञायते इत एवोर्ध्वस्स्वरुदेति स उपरि मूर्ध्नो लेलायति ४ स विद्यादागमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यत इति तस्मिन्ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ५ तदेतदभ्रातृव्यं साम न ह वा इन्द्रः कं चन भ्रातृव्यम्पश्यते स यथेन्द्रो न कं चन भ्रातृव्यम्पश्यत एवमेव न कं चन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ६ ४५

चतुर्दशेऽनुवाके चतुर्थः खगडः

चतुर्दशोऽनुवाकस्समाप्तः

प्रजापतिर्वा वेद अग्र आसीत् सोऽकामयत बहुस्स्याम्प्रजायेय भूमानं गच्छेयमिति १ स षोडशधात्मानं व्यकुरुत भद्रं च समाप्तिश्चाभूतिश्च सम्भूतिश्च भूतं

च सर्वं च रूपं चापरिमितं च श्रीश्च यशश्च नाम चाग्रं च सजाताश्च पयश्च महीया च रसश्च २ तद्यद्भद्रं हृदयमस्य तत्ततस्संवत्सरमसृजत तदस्य संवत्सरोऽनूपतिष्ठते ३ समाप्तिः कर्मास्य तत् कर्मणा हि समाप्नोति तत ऋतूनसृजत तदस्य र्तवोऽनूपतिष्ठन्ते ४ आभूतिरन्नमस्य तत् तच्चतुर्धा भवति ततो मासानर्धमासानहोरात्राणयुषसोऽसृजत तदस्य मासा अर्धमासा अहोरात्राणयुषसोऽनूपतिष्ठन्ते ५ सम्भूती रेतोऽस्य तद् रेतसो हि सम्भवति ६ ४६

पञ्चदशेऽनुवाके प्रथमः खगडः

ततश्चन्द्रमसमसृजत तदस्य चन्द्रमा अनूपतिष्ठते तस्मात्स रेतसः प्रतिरूपः १ भूतम्प्राणोऽस्य सः ततो वायुमसृजत तदस्य वायुरनूपतिष्ठते २ सर्वमपानोऽस्य सः ततः पशूनसृजत तदस्य पशवोऽनूपतिष्ठन्ते ३ रूपं व्यानोऽस्य सः ततः प्रजा असृजत तदस्य प्रजा अनूपतिष्ठन्ते तस्मादासु प्रजासु रूपाणयधिगम्यन्ते ४ अपरिमितम्मनोऽस्य तत्ततो दिशोऽसृजत तदस्य दिशोऽनूपतिष्ठन्ते तस्मात्ता अपरिमिताः अपरिमितमिव हि मनः ५ श्रीर्वागस्य सा ततस्समुद्रमसृजत तदस्य समुद्रोऽनूपतिष्ठते ६ यशस्तपोऽस्य तत्ततोऽग्निमसृजत तदस्याग्निरनूपतिष्ठते तस्मात्स मथितादिव संतप्तादिव जायते ७ नाम चक्षुरस्य तत् ८ ४७

पञ्चदशेऽनुवाके द्वितीयः खगडः

तत आदित्यमसृजत तदस्यादित्योऽनूपतिष्ठते १ अग्रम्मूर्धास्य सः ततो दिवमसृजत तदस्य द्यौरनूपतिष्ठते २ सजाता अङ्गान्यस्य तानि अङ्गैर्हि सह जायते ततो वनस्पतीनसृजत तदस्य वनस्पतयोऽनूपतिष्ठन्ते ३ पयो लोमान्यस्य तानि तत ओषधीरसृजत तदस्यौषधयोऽनूपतिष्ठन्ते ४ महीया मांसान्यस्य तानि मांसैर्हि सह महीयते ततो वयांस्यसृजत तदस्य वयांस्यनूपतिष्ठन्ते तस्मात्तानि प्रपतिष्णूनि प्रपतिष्णूनीव महामांसानि ५ रसो मज्जास्य सः ततः पृथिवीमसृजत तदस्य पृथिव्यनूपतिष्ठते ६ स हैवं षोडशधात्मानं विकृत्य सार्धं समैत्तद्यत्सार्धं समैतत्तत्साम्नस्सामत्वम् ७ स एवैष हिरगमयः पुरुष उदतिष्ठत्प्रजानां जनिता ८ ४८

पञ्चदशेऽनुवाके तृतीयः खगडः

देवासुरा अस्पर्धन्त ते देवाः प्रजापतिमुपाधावञ्जयामासुरानिति १ सोऽब्रवीन्न वै मां यूयं वित्थ नासुराः यद्वै मां यूयं विद्यात ततो वै यूयमेव स्यात परासुरा भवेयुरिति २ तद्वै ब्रूहीत्यब्रुवन्सोऽब्रवीत्पुरुषः प्रजापतिस्सामेति मोपाद्ध्वं ततो वै यूयमेव भविष्यथ परासुरा भविष्यन्तीति ३ तम्पुरुषः प्रजापतिस्सा-मेत्युपासत ततो वै देवा अभवन्परासुराः स यो हैवं विद्वान्पुरुषः प्रजाप-तिस्सामेत्युपास्ते भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति ४ ४९

पञ्चदशेऽनुवाके चतुर्थः खण्डः

पञ्चदशोऽनुवाकस्समाप्तः

देवा वै विजिग्याना अब्रुवन्द्वितीयं करवामहै माद्वितीया भूमेति तेऽब्रुवन्सामैव द्वितीयं करवामहै सामैव नो द्वितीयमस्त्विति १ त इमे द्यावापृथिवी अब्रुवन्समेतं साम प्रजनयतमिति २ सोऽसावस्या अबीभत्सत सोऽब्रवीद्बहु वा एतस्यां किं च किं च कुर्वन्त्यधिष्ठीवन्त्यधिचरन्त्यध्यासते पुनीत न्वेनाम-पूता वा इति ३ ते गाथामब्रुवन्त्वया पुनामेति किं ततस्स्यादिति शतसनिस्स्या इति तथेति ते गाथयापुनन्तस्मादुत गाथया शतं सुनोति ४ ते कुम्ब्या-मब्रुवन्त्वया पुनामेति किं ततस्स्यादिति शतसनिस्स्या इति तथेति ते कुम्ब्ययापुनन्तस्मादुत कुम्ब्यया शतं सुनोति ५ ते नाराशंसीमब्रुवन्त्वय पुनामेति किं ततस्स्यादिति शतसनिस्स्या इति तथेति ते नाराशंस्या-पुनन्तस्मादुत नाराशंस्या शतं सुनोति ६ ते रैभीमब्रुवन्त्वया पुनामेति किं ततस्स्यादिति शतसनिस्स्या इति तथेति ते रैभ्यापुनन्तस्मादुत रैभ्या शतं सुनोति ७ सेयम्पूता अथामुमब्रवीद्बहु वै किं च किं च पुमांश्चरति त्वमनुपुनीष्वेति ८ ५०

षोडशेऽनुवाके प्रथमः खण्डः

स ऐलबेनापुनीत पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूंसि पूतमनूक्तम्पूतं सर्वम्भवति य एवं वेद १ ते समेत्य साम प्राजनयतां तद्यत्समेत्य साम प्राजनयतां तत्साम्नस्सामत्वम् २ तदिदं साम सृष्टमद उत्क्रम्य लेला-यदतिष्ठत्तस्य सर्वे देवा ममत्विन आसन्मम ममेति ३ तेऽब्रुवन्वीदम्भजामहा इति तस्य विभागे न समपादयन्तान्प्रजापतिरब्रवीदपेत मम वा एतत् अहमेव वो विभक्ष्यामीति ४ सोऽग्निमब्रवीत्त्वं वै मे ज्येष्ठः पुत्राणामसि त्वम्प्रथमो

वृणीष्वेति ५ सोऽब्रवीन्मन्द्रं साम्नो वृणेऽन्नाद्यमिति स य एतद्गायादन्नाद एव सोऽसन्मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपवदादिति ६ अथे-न्द्रमब्रवीत्त्वमनुवृणीष्वेति ७ सोऽब्रवीदुग्रं साम्नो वृणे श्रियमिति स य एतद्गा-याच्छ्रीमानेव सोऽसन्मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमु-पवदादिति ८ अथ सोममब्रवीत्त्वमनुवृणीष्वेति ९ सोऽब्रवीद्वल्गु साम्नो वृणे प्रियमिति स य एतद्गायात्प्रिय एव स कीर्तेः प्रियश्चक्षुषः प्रियस्सर्वेषा-मसन्मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपवदादिति १० अथ बृहस्पतिमब्रवीत्त्वमनुवृणीष्वेति ११ सोऽब्रवीत्क्रौञ्चं साम्नो वृणे ब्रह्मवर्चस-मिति स य एतद्गायाद्ब्रह्मवर्चस्येव सोऽसन्मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपवदादिति १२ ५१

षोडशेऽनुवाके द्वितीयः खगडः

अथ विश्वान्देवानब्रवीद्यूयमनुवृणीध्वमिति १ तेऽब्रुवन्वैश्वदेवं साम्नो वृणीमहे प्रजननमिति स य एतद्गायात्प्रजावानेव सोऽसदस्मानु देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपवदादिति २ अथ पशूनब्रवीद्यूयमनुवृणीध्वमिति ३ तेऽब्रुवन्वायुर्वा अस्माकमीशे स एव नो वरिष्यत इति ते वायुश्च पशव-श्चाब्रुवन्निरुक्तं साम्नो वृणीमहे पशव्यमिति स य एतद्गायात्पशुमानेव सोऽसदस्मानु च स वायुं च देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपव-दादिति ४ अथ प्रजापतिरब्रवीदहमनुवरिष्य इति ५ सोऽब्रवीदनिरुक्तं साम्नो वृणे स्वर्ग्यमिति स य एतद्गायात्स्वर्गलोक एव सोऽसन्मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपवदादिति ६ अथ वरुणमब्रवीत्त्वमनुवृणीष्वेति ७ सोऽब्रवीद्यद्वो न कश्चनावृत तदहम्परिहरिष्य इति किमिति अपध्वान्तं साम्नो वृणेऽपशव्यमिति स य एतद्गायादपशुरेव सोऽसन्मामु स देवानामृच्छाद्य एतद्गायादिति ८ तानि वा एतान्यष्टौ गीतागीतानि साम्नः इमान्यु ह वै सप्त गीतानि अथेयमेव वारुणयागागीता ९ स यां ह कां चैवं विद्वानेतासां सप्ताना-मागानां गायति गीतमेवास्य भवत्येतानु कामान्प्राप्नोति य एतासु कामाः अथेमामेव वारुणीमागां न गायेत् १० ५२

षोडशेऽनुवाके तृतीयः खगडः

षोडशोऽनुवाकस्समाप्तः

द्वयं वावेदमग्र आसीत्सच्चैवासच्च १ तयोर्यत्सत्तत्साम तन्मनस्स प्राणः अथ यदसत्सर्क्सा वाक्सोऽपानः २ तद्यन्मनश्च प्राणश्च तत्समानमथ या वाक्चा-पानश्च तत्समानमिदमायतनम्मनश्च प्राणश्चेदमायतनं वाक्चापानश्च तस्मा-त्पुमान्दक्षिणतो योषामुपशेते ३ सेयमृगस्मिन्सामन्मिथुनमैच्छत तामपृच्छत्का त्वमसीति साहमस्मीत्यब्रवीत् अथ वा अहममोऽस्मीति ४ तद्यत्सा चामश्च तत्सामाभवत्तत्साम्नस्सामत्वम् ५ तौ वै सम्भवावेति नेत्यब्रवीत्स्वसा वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति ६ साब्रवीन्न वै तं विन्दामि येन सम्भवेयं त्वयैव सम्भवानीति सा वै पुनीष्वेत्यब्रवीत् अपूता वा असीति ७ सापुनीत यदिदं विप्रा वदन्ति तेन साब्रवीत्क्वेदम्भविष्यतीति प्रत्यूहेत्यब्रवीत् धीर्वा एषा प्रजानां जीवनं वा एतद्भविष्यतीति तथेति तत्प्रत्यौहत्तस्मादेषा धीरेव प्रजानां जीवनमेव ८ पुनीष्वेत्यब्रवीत् सापुनीत गाथया सापुनीत कुम्ब्यया सापुनीत नाराशंस्या सापुनीत पुराणेतिहासेन सापुनीत यदिदमादाय नागायन्ति तेन ९ साब्रवीत्क्वेदम्भविष्यतीति प्रत्यूहेत्यब्रवीत् धीर्वा एषा प्रजानां जीवनं वा एतद्भविष्यतीति तथेति तत्प्रत्यौहत्तस्मादेषा धीर्वेव प्रजानां जीवनम्वेव १० पुनीष्वैवेत्यब्रवीत् ११ ५३

सप्तदशेऽनुवाके प्रथमः खण्डः

सा मधुनापुनीत तस्मादुत ब्रह्मचारी मधु नाश्नीयाद्वेदस्य पलाव इति कामं ह त्वाचार्यदत्तमश्नीयात् १ अथर्क्सामाब्रवीद्बहु वै किं च किं च पुमांश्चरति त्वमनुपुनीष्वेति स भरण्डकेष्णेनापुनीत पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूंषि पूतमनूक्तम्पूतं सर्वम्भवति य एवं वेद २ ताभ्यां सदो मिथुनाय पर्यश्रयन्तस्मादुपवसथीयां रात्रिं सदसि न शयीत अत्र ह्येतावृक्सामे उपवसथीयां रात्रिं सदसि सम्भवतः स यथा श्रेयस उपद्रष्टैवं हि शश्व-दीश्वरोऽनुलब्धः पराभवितोः ३ अथो आहुरुद्गातुर्मुखे सम्भवतः उद्गातुरेव मुखं नेक्षेतेति ४ तदु वा आहुः काममेवोद्गातुर्मुखमीक्षेत उपवसथीयामेवैतां रात्रिं सदसि न शयीत अत्र ह्येवैतावृक्सामे उपवसथीयां रात्रिं सदसि सम्भवत इति ५ तां सम्भविष्यन्नाहामोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं सा मामनुव्रता भूत्वा प्रजाः प्रजनयावहै एहि सम्भवावहा इति ६ तां सम्भवन्नत्यरिच्यत सो-ऽब्रवीन्न वै त्वानुभवामि विराड्भूत्वा प्रजनयारेति तथेति ७ तौ विराड्भूत्वा प्राजनयतां हिङ्कारश्चाहावश्च प्रस्तावश्च प्रथमा चोद्गीथश्च मध्यमा च प्रति-

हारश्चोत्तमा च निधनं च वषट्कारश्चैवं विराड्भूत्वा प्राजनयतां ते ग्रमुमजनयतां योऽसौ तपति ते व्यद्रवताम् ८ ५४

सप्तदशेऽनुवाके द्वितीयः खराडः

मदध्यभू३न्मदध्यभू३दिति तस्मादाहुर्मधुपुत्र इति १ तस्मादुत स्त्रियो मधु नाश्नन्ति पुत्राणामिदं व्रतं चराम इति वदन्तीः २ तदयं तृचोऽनूदश्रयत इयमेव गायत्र्यन्तरिक्षं त्रिष्टुब् ग्रसौ जगती तस्यैतत्तृचः ३ स उपरिष्टात्सामाध्याहितं तपति सोऽध्रुव इवासीदलेलायदिव स नोर्ध्वोऽतपत् ४ स देवानब्रवीदुन्मा गायतेति किं ततस्स्यादिति श्रियं वः प्रयच्छेयम्मामिह दृंहेतेति ५ तथेति तमुदगायन्तमेतदत्रादृंहन्तेभ्यश्श्रियम्प्रायच्छत् सैषा देवानां श्रीः ६ तत एतदूर्ध्वस्तपति स नार्वाङतपत् ७ स ऋषीनब्रवीदनु मा गायतेति किं ततस्स्यादिति श्रियं वः प्रयच्छेयम्मामिह दृंहेतेति ८ तथेति तमन्वगायन्तमेतदत्रादृंहन्तेभ्यश्श्रियम्प्रायच्छत् सैषर्षीणां श्रीः ९ तत एतदर्वाङ्तपति स न तिर्यङ्ङतपत् १० स गन्धर्वाप्सरसोऽब्रवीदा मा गायतेति किं ततस्स्यादिति श्रियं वः प्रयच्छेयम्मामिह दृंहेतेति ११ तथेति तमागायन्तमेतदत्रादृंहन्तेभ्यश्श्रियम्प्रायच्छत् सैषा गन्धर्वाप्सरसां श्रीः १२ तत एतत्तिर्यङ्तपति १३ तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतं तद्यथेदं वयमागायोद्गायाम एतदुद्गीतमथ यद्यथागीतं तदनुगीतमथ यत्किं चेति साम्नस्तदागीतमेतानि ह्येव त्रीणि साम्नः १४ ५५

सप्तदशेऽनुवाके तृतीयः खराडः

सप्तदशोऽनुवाकस्समाप्तः

ग्रापो वा इदमग्रे महत्सलिलमासीत् स ऊर्मिरूर्मिमस्कन्दत्ततो हिरगमयौ कुक्ष्यौ समभवतां ते एवर्क्सामे १ सेयमृगिदं सामाभ्यप्लवत तामपृच्छत्का त्वमसीति साहमस्मीत्यब्रवीत् ग्रथ वा ग्रहममोऽस्मीति तद्यत्सा चामश्च तत्साम्नस्सामत्वम् २ तौ वै सम्भवावेति नेत्यब्रवीत्स्वसा वै मम त्वमसि ग्रन्यत्र मिथुनमिच्छस्वेति ३ सा पराप्लवत मिथुनमिच्छमाना सा समास्सहस्रं सप्ततीः पर्यप्लवत ४ तदेष श्लोकस्स्त्री स्मैवाग्रे संचरतीच्छन्ती सलिले पतिं समास्सहस्रं सप्ततीस्ततोऽजायत पश्यत इति ५ ग्रसौ वा ग्रादित्यः पश्यतः एष एव तदजायत एतेन हि पश्यति ६ सावित्त्वा न्यप्लवत

साब्रवीन्न वै तं विन्दामि येन सम्भवेयं त्वयैव सम्भवानीति ७ सा वै द्वि-
तीयामिच्छस्वेत्यब्रवीन्न वै मैकोद्यंस्यसीति सा द्वितीयां वित्त्वा न्यप्लवत ८
तृतीयामिच्छस्वैवेत्यब्रवीन्नो वाव मा द्वे उद्यंस्यथ इति सा तृतीयां वित्त्वा
न्यप्लवत सोऽब्रवीदत्र वै मोद्यंस्यथेति ९ स यदेकयाग्रे समवदत तस्मादेकर्चे
साम अथ यद्द्वे अपासेधत्तस्माद्द्वयोर्न कुर्वन्ति अथ यत्तिसृभिस्समपादय-
त्तस्मादु तृचे साम १० ता अब्रवीत्पुनीध्वं न पूता वै स्थेति ११ ५६

अष्टादशेऽनुवाके प्रथमः खण्डः

सा गायत्री गाथयापुनीत नाराशंस्या त्रिष्टुब् रैभ्या जगती भीमम्बत
मलमपावधिषतेति तस्माद्भीमला धियो वा एताः धियो वा इमा
मलमपावधिषतेति तस्मादु भीमलाः तस्मादु गायतां नाश्नीयात् मलेन ह्येते
जीवन्ति १ अथर्क्सामाब्रवीद्बहु वै किं च किं च पुमांश्चरति त्वमनुपुनीष्वेति
स ऊर्ध्वगणेनापुनीत २ पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूंषि
पूतमनूक्तम्पूतं सर्वम्भवति य एवं वेद ३ ताभ्यां दिशो मिथुनाय पर्यौहन्तां
सम्भविष्यन्नह्वयतामोऽहमस्मि सा त्वं सा त्वमस्यमोऽहमिति ४ तामेतदुभयतो
वाचात्यरिच्यत हिङ्कारेण पुरस्तात्स्तोभेन मध्यतो निधनेनोपरिष्टात् अति तिस्रो
ब्राह्मणायनीस्सदृशी रिच्यते य एवं वेद ५ तयोर्यस्सम्भवतोरूर्ध्वश्शूषोऽद्रवत्
प्राणास्ते ते प्राणा एवोर्ध्वा अद्रवन् ६ सोऽसावादित्यस्स एष एव उदग्निरेव
गी चन्द्रमा एव थं सामान्येव उदृच एव गी यजूंष्येव थमित्यधिदेवतम् ७
अथाध्यात्मं प्राण एव उद्वागेव गी मन एव थं स एषोऽधिदेवतं चाध्यात्मं
चोद्गीथः ८ स य एवमेतदधिदेवतं चाध्यात्मं चोद्गीथं वेदैतेन हास्य सर्वेणो-
द्गीतम्भवत्येतस्मादु एव सर्वस्मादावृश्च्यते य एवं विद्वांसमुपवदति ९ ५७

अष्टादशेऽनुवाके द्वितीयः खण्डः

तद्यदिदमाहुः क उदगासीरिति क एतमादित्यमगासीरिति ह वा एतत्पृच्छन्ति
१ एतं ह वा एतं त्रय्या विद्यया गायन्ति यथा वीणागाथिनो गापयेयुरेवम् २
स एष ह्रदः कामानाम्पूर्णो यन्मनः तस्यैषा कुल्या यद्वाक् ३ तद्यथा वा अपो
ह्रदात्कुल्ययोपरामुपनयन्त्येवमेवैतन्मनसोऽधि वाचोद्गाता यजमानम्यस्य
कामान्प्रयच्छति ४ स य उद्गातारं दक्षिणाभिराराधयति तं सा कुल्योपधावति
य उ एनं नाराधयति स उ तामपिहन्ति ५ अथ वा अतः प्रत्तिश्चैव प्रतिग्रहश्च

तद्भूममिति वै प्रदीयते तद्वाचा यजमानाय प्रदेयम्मनसात्मने तथा ह सर्वं न प्रयच्छति ६ तद्यदिदं सम्भवतो रेतोऽसिच्यत तदशयत् यथा हिरण्यमविकृतं लेलायदेवम् ७ तस्य सर्वे देवा ममत्विन आसन्मम ममेति तेऽब्रुवन्वीदं करवामहा इति तेऽब्रुवञ्छ्रेयो वा इदमस्मत् आत्मभिरेवैनद्विकरवामहा इति ८ तदात्मभिरेव व्यकुर्वत तेषां वायुरेव हिङ्कार आसाग्निः प्रस्ताव इन्द्र आ-दिस्सोमबृहस्पती उद्गीथोऽश्विनौ प्रतिहारो विश्वे देवा उपद्रवः प्रजापतिरेव निधनम् ९ एता वै सर्वा देवता एता हिरण्यमस्य सर्वाभिर्देवताभिस्स्तुतम्भ-वति य एवं वेद एताभ्य उ एव स सर्वाभ्यो देवताभ्य आवृश्चयते य एवं विद्वांसमुपवदति १० ५८

अष्टादशेऽनुवाके तृतीयः खण्डः

अथ ह ब्रह्मदत्तश्चैकितानेयः कुरुं जगामाभिप्रतारिणं काक्षसेनिं स हास्मै मधुपर्कं ययाच १ अथ हास्य वै प्रपद्य पुरोहितोऽन्ते निषसाद शौनकः तं हानामन्त्र्य मधुपर्कम्पपौ २ तं होवाच किं विद्वान्नो दाल्भ्यानामन्त्र्य मधुपर्कम्पिबसीति सामवैर्यम्प्रपद्येति होवाच ३ तं ह तत्रैव पप्रच्छ यद्वायौ तद्वेत्था३ इति हिङ्कारो वा अस्य स इति ४ यदग्नौ तद्वेत्था३ इति प्रस्तावो वा अस्य स इति ५ यदिन्द्रे तद्वेत्था३ इति आदिर्वा अस्य स इति ६ यत्सोमबृहस्पत्योस्तद्वेत्था३ इति उद्गीथो वा अस्य स इति ७ यदश्विनोस्तद्वेत्था३ इति प्रतिहारो वा अस्य स इति ८ यद्विश्वेषु देवेषु तद्वेत्था३ इति उपद्रवो वा अस्य स इति ९ यत्प्रजा-पतौ तद्वेत्था३ इति निधनं वा अस्य तदिति होवाच आर्षेयं वा अस्य तद्बन्धुता वा अस्य सेति १० स होवाच नमस्तेऽस्तु भगवो विद्वानपा मधुपर्कमिति ११ अथ हेतरः पप्रच्छ किंदेवत्यं सामवैर्यम्प्रपद्येति यद्देवत्यासु स्तुवत इति होवाच तद्देवत्यमिति १२ तदेतत्साध्वेव प्रत्युक्तं व्याप्तिर्वा अस्यैषेति होवाच ब्रूह्येवेति मेदं ते नमोऽकर्मेति होवाच मैव नोऽतिप्राक्षीरिति १३ स होवाचाप्रद्त्यं वाव त्वा देवतामप्रद्त्यं वाव त्वा देवतायै देवताः वाग्देवत्यं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः तदेतदद्भ्यो जातं सामाप्सु प्रतिष्ठितमिति १४ ५९

अष्टादशेऽनुवाके चतुर्थः खण्डः

देवासुरा अस्पर्धन्त ते देवा मनसोदगायन्तदेषामसुरा अभिद्रुत्य पाप्मना

समसृजन्तस्माद्बहु किं च किं च मनसा ध्यायति पुण्यं चैनेन ध्यायति पापं च १ ते वाचोदगायन्तां तथैवाकुर्वन्तस्माद्बहु किं च किं च वाचा वदति सत्यं चैनया वदत्यनृतं च २ ते चक्षुषोदगायन्तत्तथैवाकुर्वन्तस्माद्बहु किं च किं च चक्षुषा पश्यति दर्शनीयं चैनेन पश्यत्यदर्शनीयं च ३ ते श्रोत्रेणोद-गायन्तत्तथैवाकुर्वन्तस्माद्बहु किं च किं च श्रोत्रेण शृणोति श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ४ तेऽपानेनोदगायन्तं तथैवाकुर्वन्तस्माद्बहु किं च किं चापानेन जिघ्रति सुरभि चैनेन जिघ्रति दुर्गन्धि च ५ ते प्राणेनोदगायनथा-सुरा आद्रवंस्तथा करिष्याम इति मन्यमानाः ६ स यथाश्मानमृत्वा लोष्टो विध्वंसेतैवमेवासुरा व्यध्वंसन्त स एषोऽश्माखणं यत्प्राणः ७ स यथाश्मान-माखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपवदति ८ ६०

अष्टादशेऽनुवाके पञ्चमः खण्डः
अष्टादशोऽनुवाकस्समाप्तः
इति प्रथमोऽध्यायः

अथ द्वितीयोऽ ध्यायः

देवानां वै षडुद्गातार आसन्वाक्च मनश्च चक्षुश्च श्रोत्रं चापानश्च प्राणश्च १ तेऽध्रियन्त तेनोद्गात्रा दीक्षामहै येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति २ तेऽब्रुवन्वाचोद्गात्रा दीक्षामहा इति ते वाचोद्गात्रादीक्षन्त स यदेव वाचा वदति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ३ ताम्पाप्मान्वसृज्यत स यदेव वाचा पापं वदति स एव स पाप्मा ४ तेऽब्रुवन्न वै नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् मनसोद्गात्रा दिक्षामहा इति ५ ते मनसोद्गात्रादीक्षन्त स यदेव मनसा ध्यायति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ६ तत्पाप्मान्वसृज्यत स यदेव मनसा पापं ध्यायति स एव स पाप्मा ७ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् चक्षुषोद्गात्रा दीक्षामहा इति ८ ते चक्षुषोद्गात्रादीक्षन्त स यदेव चक्षुषा पश्यति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ९ तत्पाप्मान्वसृज्यत स यदेव चक्षुषा पापम्पश्यति स एव स पाप्मा १० तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् श्रोत्रेणोद्गात्रा दीक्षामहा इति ११ ते श्रोत्रेणोद्गात्रादीक्षन्त स यदेव श्रोत्रेण शृणोति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः १२

तत्पाप्मान्वसृज्यत स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा १३ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् अपानेनोद्गात्रा दीक्षामहा इति १४ तेऽपानेनोद्गात्रादीक्षन्त स यदेवापानेनापानिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः १५ तम्पाप्मान्वसृज्यत स यदेवापानेन पापं गन्धमपानिति स एव स पाप्मा १६ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् प्राणेनोद्गात्रा दीक्षामहा इति १७ ते प्राणेनोद्गात्रादीक्षन्त स यदेव प्राणेन प्राणिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः १८ तम्पाप्मा नान्वसृज्यत न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति १९ तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमाय-नपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद २० १

प्रथमेऽनुवाके प्रथमः खण्डः

सा या सा वागासीत्सोऽग्निरभवत् १ अथ यत्तन्मन आसीत्स चन्द्रमा अभवत् २ अथ यत्तच्चक्षुरासीत्स आदित्योऽभवत् ३ अथ यत्तच्छ्रोत्रमासीत्ता इमा दिशोऽभवन्ता उ एव विश्वे देवाः ४ अथ यस्सोऽपान आसीत्स बृहस्पति-रभवत् यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पतिः ५ अथ यस्स प्राण आसीत्स प्रजापतिरभवत् स एष पुत्री प्रजावानुद्गीथो यः प्राणः तस्य स्वर एव प्रजाः प्रजावान्भवति य एवं वेद ६ तं हैतमेके प्रत्यक्षमेव गायन्ति प्राणा३ प्राणा३ प्राणा३ हुम्भा ओवा इति ७ तदु होवाच शाट्यायनिस्तत एतमर्हति प्रत्यक्षं गातुं यद्वाव वाचा करोति तदेतदेवास्य कृतम्भवतीति ८ अथ वा अत ऋक्सा-म्नोरेव प्रजातिः स यद्धिङ्करोत्यभ्येव तेन क्रन्दति अथ यत्प्रस्तौत्यैव तेन प्लवते अथ यदादिमादत्ते रेत एव तेन सिञ्चति अथ यदुद्गायति रेत एव तेन सिक्तं सम्भावयति अथ यत्प्रतिहरति रेत एव तेन सम्भूतम्प्रवर्धयति अथ यदुपद्रवति रेत एव तेन प्रवृद्धं विकरोति अथ यन्निधनमुपैति रेत एव तेन विकृतम्प्रजनयति सैषर्क्साम्नोः प्रजातिः ९ स य एवमेतामृक्साम्नोः प्रजातिं वेद प्र हैनमृक्सामनी जनयतः १० २

प्रथमेऽनुवाके द्वितीयः खण्डः
प्रथमोऽनुवाकस्समाप्तः

एष एवेदमग्र आसीद्य एष तपति स एष सर्वेषाम्भूतानां तेजो हर इन्द्रियं

वीर्यमादायोर्ध्व उदक्रामत् १ सोऽकामयतैकमेवाक्षरं स्वादु मृदु देवानां वनामेति २ स तपोऽतप्यत स तपस्तप्त्वैकमेवाक्षरमभवत् ३ तं देवाश्चर्षय-श्चोपसमैप्सन्नथैषोऽसुरान्भूतहनोऽसृजतैतस्य पाप्मनोऽनन्वागमाय ४ तं वा-चोपसमैप्सन्ते वाचं समारोहन्तेषां वाचम्पर्यादत्त तस्मात्पर्यादत्ता वाक् सत्यं च ह्येनया वदत्यनृतं च ५ तम्मनसोपसमैप्सन्ते मनस्समारोहन्तेषाम्मनः पर्यादत्त तस्मात्पर्यादत्तम्मनस्पुण्यं च ह्येनेन ध्यायति पापं च ६ तं चक्षुषो-पसमैप्सन्ते चक्षुस्समारोहन्तेसां चक्षुः पर्यादत्त तस्मात्पर्यात्तं चक्षुः दर्शनीयं च ह्येनेन पश्यत्यदर्शनीयं च ७ तं श्रोत्रेणोपसमैप्सन्ते श्रोत्रं समारोहन्तेषां श्रोत्रम्पर्यादत्त तस्मात्पर्यात्तं श्रोत्रं श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ८ तमपानेनोपसमैप्सन्तेऽपानं समारोहन्तेषामपानम्पर्यादत्त तस्मात्पर्यात्तोऽपानः सुरभि च ह्येनेन जिघ्रति दुर्गन्धि च ९ तम्प्राणेनोपसमैप्सन्तम्प्राणेनोप-समाप्नुवन् १० अथासुरा भूतहन आद्रवन्मोहयिष्याम इति मन्यमानाः ११ स यथाश्मानमृत्वा लोष्टो विध्वंसेतैवमेवासुरा व्यध्वंसन्त स एषोऽश्माखणो यत्प्राणः १२ स यथाश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपवदति १३ ३

द्वितीयेऽनुवाके प्रथमः खण्डः

स एष वशी दीप्ताग्र उद्गीथो यत्प्राणः एष हीदं सर्वं वशे कुरुते १ वशी भवति वशे स्वान्कुरुते य एवं वेद अस्य ह्यसावग्रे दीप्यते३ अमुष्य वा सः २ तं हैतमुद्गीथं शाट्यायनिराचष्टे वशी दीप्ताग्र इति दीप्ताग्रा ह वा अस्य कीर्तिर्भवति य एवं वेद ३ आभूतिरिति कारीरादयः प्राणं वा अनु प्रजाः पशव आभवन्ति स य एवमेतमाभूतिरित्युपास्त ऐव प्राणेन प्रजया पशुभिर्भवति ४ सम्भूतिरिति सात्ययज्ञयः प्राणं वा अनु प्रजाः पशवस्सम्भवन्ति स य एवमेतं सम्भूतिरित्युपास्ते समे व प्राणेन प्रजया पशुभिर्भवति ५ प्रभूतिरिति शैलनाः प्राणं वा अनु प्रजाः पशवः प्रभवन्ति स य एवमेतम्प्रभूतिरित्युपास्ते प्रैव प्राणेन प्रजया पशुभिर्भवति ६ भूतिरिति भाल्लबिनः प्राणं वा अनु प्रजाः पशवो भवन्ति स य एवमेतम्भूतिरित्युपास्ते भवत्येव प्राणेन प्रजया पशुभिः ७ अपरोधोऽनपरुद्ध इति पार्ष्णश्शैलनः एष ह्यन्यमपरुणद्धि नैतमन्यः एष ह वास्य द्विषन्तम्भ्रातृव्यमपरुणद्धि य एवं वेद ८ ४

द्वितीयेऽनुवाके द्वितीयः खण्डः

एकवीर इत्यारुणेयः एको ह्येवैष वीरो यत्प्राणः आ हास्यैको वीरो वीर्यवाञ्जायते य एवं वेद १ एकपुत्र इति चैकितानेयः एको ह्येवैष पुत्रो यत्प्राणः २ स उ एव द्विपुत्र इति द्वौ हि प्राणापानौ ३ स उ एव त्रिपुत्र इति त्रयो हि प्राणोऽपानो व्यानः ४ स उ एव चतुष्पुत्र इति चत्वारो हि प्राणोऽपानो व्यानस्समानः ५ स उ एव पञ्चपुत्र इति पञ्च हि प्राणोऽपानो व्यानस्स- मानोऽवानः ६ स उ एव षट्पुत्र इति षड्ढि प्राणोऽपानो व्यानस्समानोऽवान उदानः ७ स उ एव सप्तपुत्र इति सप्त हीमे शीर्षगयाः प्राणाः ८ स उ एव नवपुत्र इति सप्त हि शीर्षगयाः प्राणा द्वाववाञ्चौ ९ स उ एव दशपुत्र इति सप्त शीर्षगयाः प्राणा द्वाववाञ्चौ नाभ्यां दशमः १० स उ एव बहुपुत्र इति एतस्य हीयं सर्वाः प्रजाः ११ एतं ह स्म वै तदुद्गीथं विद्वांसः पूर्वे ब्राह्मणाः कामागायिन आहुः कति ते पुत्रानागास्याम इति १२ ५

द्वितीयेऽनुवाके तृतीयः खगडः

स यदि ब्रूयादेकम्म आगायेति प्राण उद्गीथ इति विद्वानेकम्मनसा ध्यायेत् एको हि प्राणः एको हास्याजायते १ स यदि ब्रूयाद्द्वौ म आगायेति प्राण उद्गीथ इत्येव विद्वान्द्वौ मनसा ध्यायेत् द्वौ हि प्राणापानौ द्वौ हैवास्याजायेते २ स यदि ब्रूयात्त्रीन्म आगायेति प्राण उद्गीथ इत्येव विद्वांस्त्रीन्मनसा ध्यायेत् त्रयो हि प्राणोऽपानो व्यानः त्रयो हैवास्याजायन्ते ३ स यदि ब्रूयाच्चतुरो म आगायेति प्राण उद्गीथ इत्येव विद्वांश्चतुरो मनसा ध्यायेत् चत्वारो हि प्राणोऽपानो व्यानस्समानः चत्वारो हैवास्याजायन्ते ४ स यदि ब्रूयात्पञ्च म आगायेति प्राण उद्गीथ इत्येव विद्वान्पञ्च मनसा ध्यायेत् पञ्च हि प्राणोऽपानो व्यानस्समानोऽवानः पञ्च हैवास्याजायन्ते ५ स यदि ब्रूयात्षगम आगायेति प्राण उद्गीथ इत्येव विद्वान्षगमनसा ध्यायेत् षड्ढि प्राणोऽपानो व्यानस्समा- नोऽवान उदानः षड्ढैवास्याजायन्ते ६ स यदि ब्रूयात्सप्त म आगायेति प्राण उद्गीथ इत्येव विद्वान्सप्त मनसा ध्यायेत् सप्त हीमे शीर्षगयाः प्राणाः सप्त हैवास्याजायन्ते ७ स यदि ब्रूयान्नव म आगायेति प्राण उद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत् सप्त शीर्षगयाः प्राणा द्वाववाञ्चौ नव हैवास्याजायन्ते ८ स यदि ब्रूयाद्दश म आगायेति प्राण उद्गीथ इत्येव विद्वान्दश मनसा ध्यायेत् सप्त शीर्षगयाः प्राणा द्वाववाञ्चौ नाभ्यां दशमः दश हैवास्याजायन्ते ९ स यदि ब्रूयात्सहस्त्रम्म आगायेति प्राण उद्गीथ इत्येव विद्वान्सहस्त्रम्मनसा ध्यायेत्

सहस्त्रं हैत आदित्यरश्मयः तेऽस्य पुत्राः सहस्त्रं हैवास्याजायन्ते १० एवं हैवैतमुद्गीथम्पर आट्णारः कत्तीवांस्त्रसदस्युरिति पूर्वे महाराजाश्श्रोत्रिया-स्सहस्त्रपुत्रमुपनिषेदुः ते ह सर्व एव सहस्त्रपुत्रा आसुः ११ स य एवैवं वेद सहस्त्रं हैवास्य पुत्रा भवन्ति १२ ६

द्वितीयेऽनुवाके चतुर्थः खगडः

द्वितीयोऽनुवाकस्समाप्तः

शर्यातो वै मानवः प्राच्यां स्थल्यामयजत तस्मिन्ह भूतान्युद्गीथेऽपित्वमेषिरे १ तं देवा बृहस्पतिनोद्गात्रा दीत्तामहा इति पुरस्तादागच्छन्नयं त उद्गायत्विति बम्बेनाजद्विषेण पितरो दत्तिणतोऽयं त उद्गायत्वित्युशनसा काव्येनासुराः पश्चादयं त उद्गायत्वित्ययास्येनाङ्गिरसेन मनुष्या उत्तरतोऽयं त उद्गायत्विति २ स हेत्तां चक्रे हन्तैनान्पृच्छानि कियतो वा एक ईशे कियत एकः कियत एक इति ३ स होवाच बृहस्पतिं यन्मे त्वमुद्गायेः किं ततस्स्यादिति ४ स होवाच देवेष्वेव श्रीस्स्याद्देवेष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ५ अथ होवाच बम्बमाजद्विषम्यन्मे त्वमुद्गायेः किं ततस्स्यादिति ६ स होवाच पितृष्वेव श्रीस्स्यात्पितृष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ७ अथ होवाचोशनसं काव्यं यन्मे त्वमुद्गायेः किं ततस्स्यादिति ८ स होवाचासुरेष्वेव श्रीस्स्या-दसुरेष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ९ अथ होवाचायास्यमाङ्गिरसं यन्मे त्वमुद्गायेः किं ततस्स्यादिति १० स होवाच देवानेव देवलोके दध्या-म्मनुष्यान्मनुष्यलोके पितॄन्पितृलोके नुदेयास्माल्लोकादसुरान्स्वर्गमु त्वां लोकं गमयेयमिति ११ ७

तृतीतेऽनुवाके प्रथमः खगडः

स होवाच त्वम्मे भगव उद्गाय य एतस्य सर्वस्य यशो ऽसीति १ तस्य हायास्य एवोज्ञगौ तस्मादुद्गाता वृत उत्तरतो निवेशनं लिप्सेत एतद्ध नारुद्धं निवेशनं यदुत्तरतः २ उत्तरत आगतोऽयास्य आङ्गिरसश्शर्यातस्य मानवस्योज्ञगौ स प्राणेन देवान्देवलोकेऽदधादपानेन मनुष्यान्मनुष्यलोके व्यानेन पितॄन्पितृलोके हिङ्कारेण वज्रेणास्माल्लोकादसुराननुदत ३ तान्होवाच दूरं गच्छतेति स दूरो ह नाम लोकः तं ह जग्मुः त एतेऽसुरा असम्भाव्यम्पराभूताः ४ छन्दोभिरेव वाचा शर्यातम्मानवं स्वर्गं लोकं गमयां चकार ५ ते होचुरसुरा एत तं वेदाम

यो नोऽयमित्थमधत्तेति तत आगच्छन्तमेत्यापश्यन् ६ तेऽब्रुवन्नयं वा आस्य इति यदब्रुवन्नयं वा आस्य इति तस्मादयमास्यः अयमास्यो ह वै नामैषः तमयास्य इति परोक्षमाचक्षते ७ स प्राणो वा अयास्यः प्राणो ह वा एनान्स नुनुदे ८ स य एवं विद्वानुद्गायति प्राणेनैव देवान्देवलोके दधात्यपानेन मनुष्यान्मनुष्यलोके व्यानेन पितॄन्पितृलोके हिङ्कारेणैव वज्रेणास्माल्लोकाद्द्विषन्तम्भ्रातृव्यं नुदते ९ ८

तृतीयेऽनुवाके द्वितीयः खण्डः

तं ह ब्रूयाद्दूरं गच्छेति स यमेव लोकमसुरा अगच्छंस्तं हैव गच्छति १ छन्दोभिरेव वाचा यजमानं स्वर्गं लोकं गमयति २ ता एता व्याहृतयः प्रेत्येति वाग् इति भूर्भुवस्स्वरित्य् उदिति ३ तद्यत्प्रेति तत्प्राणस्तदयं लोकस्तदिमं लोकमस्मिंल्लोक आभजति ४ एत्यपानस्तदसौ लोकस्तदमुं लोकममुष्मिंल्लोक आभजति ५ वागिति तद्ब्रह्म तदिदमन्तरिक्षम् ६ भूर्भुवस्स्वरिति सा त्रयी विद्या ७ उदिति सोऽसावादित्यः तद्यदुदित्युदिव श्लेषयति ८ तद्यदेकमेवाभिसम्पद्यते तस्मादेकवीरः एको ह तु सन्वीरो वीर्यवान्भवति आ हास्यैको वीरो वीर्यवान्जायते य एवं वेद ९ तदु होवाच शाट्यायनिर्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यं बहवो ह्येत आदित्यस्य रश्मयस्तेऽस्य पुत्राः तस्माद्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यमिति तृतीयेऽनुवाके तृतीयः खण्डः १० ९

तृतीयोऽनुवाकस्समाप्तः

देवासुरास्समयतन्तेत्याहुः न ह वै तद्देवासुरास्सम्येतिरे प्रजापतिश्च ह वै तन्मृत्युश्च सम्येताते १ तस्य ह प्रजापतेर्देवाः प्रियाः पुत्रा अन्त आसुः तेऽध्रियन्त तेनोद्गात्रा दीक्षामहै येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति २ तेऽब्रुवन्वाचोद्गात्रा दीक्षामहा इति ३ ते वाचोद्गात्रादीक्षन्त तेभ्य इदं वागागायद्यदिदं वाचा वदति यदिदं वाचा भुञ्जते ४ ताम्पाप्मान्वसृज्यत स यदेव वाचा पापं वदति स एव स पाप्मा ५ तेऽब्रुवन्न वै नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् मनसोद्गात्रा दीक्षामहा इति ६ ते मनसोद्गात्रादीक्षन्त तेभ्य इदम्मन आगायद्यदिदम्मनसा ध्यायति यदिदम्मनसा भुञ्जते ७ तत्पाप्मान्वसृज्यत स यदेव मनसा पापं ध्यायति स एव स पाप्मा ८ तेऽब्रुवन्नो न्वाव

नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् चक्षुषोद्गात्रा दीक्षामहा इति ९ ते चक्षुषो-द्गात्रादीक्षन्त तेभ्य इदं चक्षुरागायद्यदिदं चक्षुषा पश्यति यदिदं चक्षुषा भुञ्जते १० तत्पाप्मान्वसृज्यत स यदेव चक्षुषा पापम्पश्यति स एव स पाप्मा ११ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् श्रोत्रेणोद्गात्रा दीक्षामहा इति १२ ते श्रोत्रेणोद्गात्रादीक्षन्त तेभ्य इदं श्रोत्रमागायद्यदिदं श्रोत्रेण शृणोति यदिदं श्रोत्रेण भुञ्जते १३ तत्पाप्मान्वसृज्यत स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा १४ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् प्राणेनोद्गात्रा दीक्षामहा इति १५ ते प्राणेनोद्गात्रादीक्षन्त तेभ्य इदम्प्राण आगायद्यदिदम्प्राणेन प्राणिति यदिदम्प्राणेन भुञ्जते १६ तम्पाप्मान्वसृज्यत स यदेव प्राणेन पापम्प्रा-णिति स एव स पाप्मा १७ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति १८ तेऽनेन मुख्येन प्राणेनो-द्गात्रादीक्षन्त १९ सोऽब्रवीन्मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति २० न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति २१ तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमाय-न्नपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद २२ १०

चतुर्थेऽनुवाके प्रथमः खराडः

स यथा हत्वा प्रमृद्यातीयादेवमेवैतम्मृत्युमत्यायन् १ स वाचम्प्रथमाम-त्यवहत्ताम्परेण मृत्युं न्यदधात् सोऽग्निरभवत् २ अथ मनोऽत्यवहत्तत्परेण मृत्युं न्यदधात् स चन्द्रमा अभवत् ३ अथ चक्षुरत्यवहत्तत्परेण मृत्युं न्यदधात् स आदित्योऽभवत् ४ अथ श्रोत्रमत्यवहत्तत्परेण मृत्युं न्यदधात्ता इमा दिशो-ऽभवन्ता उ एव विश्वे देवाः ५ अथ प्राणमत्यवहत्तम्परेण मृत्युं न्यदधात् स वायुरभवत् ६ अथात्मने केवलमेवान्नाद्यमागायत ७ स एष एवायास्यः आस्ये धीयते तस्मादयास्यः यद्वेवा यमास्ये रमते तस्माद्वेवायास्यः ८ स एष एवाङ्गिरसः अतो हीमान्यङ्गानि रसं लभन्ते तस्मादाङ्गिरसः यद्वेवैषामङ्गानां रसस्तस्माद्वेवाङ्गिरसः ९ तं देवा अब्रुवन्केवलं वा आत्मनेऽन्नाद्यमागासीः अनु न एतस्मिन्नन्नाद्य आभज एतदस्यानामयत्वमस्तीति १० तं वै प्रविशतेति स वा आकाशान्कुरुष्वेति स इमान्प्राणानाकाशानकुरुत ११ तं वागेव भूत्वाग्निः प्राविशन्मनो भूत्वा चन्द्रमाश्चक्षुर्भूत्वादित्यश्श्रोत्रम्भूत्वा दिशः प्राणो भूत्वा वायुः १२ एषा वै दैवी परिषद्दैवी सभा दैवी संसत् १३ गच्छति ह

वा एतां दैवीम्परिषदं दैवीं सभां दैवीं संसदं य एवं वेद १४ ११
चतुर्थेऽनुवाके द्वितीयः खगडः

यत्रो ह वै क्व चैता देवता निस्पृशन्ति न हैव तत्र कश्चन पाप्मा न्यङ्गः परिशिष्यते १ स विद्यान्नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यते सर्वमेवैता देवताः पाप्मानं निधक्ष्यन्तीति तथा हैव भवति २ य उ ह वा एवंविदमृच्छति यथैता देवता ऋत्वा नीयादेवं न्येति एतासु ह्येवैनं देवतासु प्रपन्नमेतासु वसन्तमुपवदति ३ तस्य हैतस्य नैव का चनार्तिरस्ति य एवं वेद य एवैनमुपवदति स आर्तिमार्च्छति ४ स य एनमृच्छादेव ता देवता उपसृत्य ब्रूयादयम्मारत्स इमामार्तिं न्येत्विति तां हैवार्तिं न्येति ५ यावदावासा उ हास्येमे प्राणा अस्मिंल्लोक एतावदावासा उ हास्यैता देवता अमुष्मिंल्लोके भवन्ति ६ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै एता मे देवता अस्मिंल्लो-के गृहान्करिष्यन्ति एता अमुष्मिंल्लोके भवन्ति तस्मादु लोकम्प्रदास्यन्तीति ७ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै एता मे देवता अस्मिं-ल्लोके गृहेभ्यो गृहान्करिष्यन्ति स्वेभ्य आयतनेभ्य इति हैव विद्यादेता देवता अमुष्मिंल्लोके लोकम्प्रदास्यन्तीति ८ तस्मादु हैवं विद्वान्नैवागृहतायै बिभी-यान्नालोकतायै एता म एतदुभयं संनंस्यन्तीति हैव विद्यात्तथा हैव भवति ९ १२

चतुर्थेऽनुवाके तृतीयः खगडः
चतुर्थोऽनुवाकस्समाप्तः

देवा वै ब्रह्मणो वत्सेन वाचमदुह्रन्नग्निर्ह वै ब्रह्मणो वत्सः १ सा या सा वाग्ब्रह्मैव तत् अथ योऽग्निर्मृत्युस्सः २ तामेतां वाचं यथा धेनुं वत्सेनोपसृज्य प्रत्तां दुहीतैवमेव देवा वाचं सर्वान्कामानदुह्रन् ३ दुहे ह वै वाचं सर्वान्कामान्य एवं वेद स हैषोऽनानृतो वाचं देवीमुदिन्धे वद वद वदेति ४ तद्यदिह पुरुषस्य पापं कृतम्भवति तदाविष्करोति यदिहैनदपि रहसीव कुर्वन्मन्यतेऽथ हैनदाविरेव करोति तस्माद्वाव पापं न कुर्यात् ५ १३
पञ्चमेऽनुवाके प्रथमः खगडः

एष उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्निः १ तं साधूपचरेत् य एनमस्मिं-

ल्लोके साधूपचरति तमेषोऽमुष्मिंल्लोके साधूपचरति अथ य एनमस्मिंल्लोके नाद्रियते तमेषोऽमुष्मिंल्लोके नाद्रियते तस्माद्वा अग्निं साधूपचरेत् २ तं नैव हस्ताभ्यां स्पृशेन्न पादाभ्यां न दण्डेन ३ हस्ताभ्यां स्पृशति यदस्यान्तिक-मवनेनिक्ते अथ यदभिप्रसारयति तत्पादाभ्याम् ४ स एनमास्पृष्त ईश्वरो दुर्धायां धातोः तस्माद्वा अग्निं साधूपचरति सुधायां हैवैनं दधाति ५ १४

पञ्चमेऽनुवाके द्वितीयः खण्डः

एष उ ह वाव देवानाम्महाशनतमो यदग्निः १ तन्न व्रत्यमददानोऽश्नीयात् यो वै महाशनेऽनश्नत्यश्नातीश्वारो हैनमभिषङ्क्तोः पूतिमिव हाश्नीयात् २ अथो ह प्रोक्तेऽशने ब्रूयात्समिन्त्स्वाग्निमिति स यथा प्रोक्तेऽशने श्रेयांसम्परिवेष्टवै ब्रूयात्तादृक्तत् ३ एतदु ह वाव साम यद्वाक् यो वै चक्षुस्साम श्रोत्रं सामेत्युपास्ते न ह तेन करोति ४ अथ य आदित्यस्साम चन्द्रमास्सामेत्युपास्ते न हैव तेन करोति ५ अथ यो वाक्सामेत्युपास्ते स एवानुष्ठ्या साम वेद वाचा हि साम्नार्त्विज्यं क्रियते ६ स यो वाचस्स्वरो जायते सोऽग्निर्वाग्वेव वाक् तदत्रैकधा साम भवति ७ स य एवमेतदेकधा साम भवद्वेदैवं हैतदेकधा साम भवतीत्येकधेव श्रेष्ठस्स्वानाम्भवति ८ तस्मादु हैवंविदमेव साम्नार्त्विज्यं कारयेत स ह वाव साम वेद य एवं वेद पञ्चमेऽनुवाके तृतीयः खण्डः ९ १५

पञ्चमोऽनुवाकस्समाप्तः

इति द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

एका ह वाव कृत्स्ना देवतार्धदेवता एवान्याः अयमेव योऽयम्पवते १ एष एव सर्वेषां देवानां ग्रहाः २ स हैषोऽस्तं नाम अस्तमिति हेह पश्चाद्गृहानाचक्षते ३ स यदादित्योऽस्तमगादिति ग्रहानगादिति हैतत्तेन सोऽसर्वः स एतमेवाप्येति ४ अस्तं चन्द्रमा एति तेन सोऽसर्वः स एतमेवाप्येति ५ अस्तं नक्षत्राणि यन्ति तेन तान्यसर्वाणि तान्येतमेवापियन्ति ६ अन्वग्निर्गच्छति तेन सोऽसर्वः स एतमेवाप्येति ७ एत्यहः एति रात्रिः तेन ते असर्वे ते एतमेवापीतः ८ मुह्यन्ति दिशो न वै ता रात्रिम्प्रज्ञायन्ते तेन ता असर्वाः ता एतमेवापियन्ति ९ वर्षति च पर्जन्य उच्च गृह्णाति तेन सोऽसर्वः स एतमेवाप्येति १० क्षीयन्त आप एव-

मोषधय एवं वनस्पतयः तेन तान्यसर्वाणि तान्येतमेवापियन्ति ११ तद्यदेतत्सर्वं वायुं एवाप्येति तस्माद्वायुरेव साम १२ स ह वै सामवित्स कृत्स्नं साम वेद य एवं वेद १३ अथाध्यात्मं न वै स्वपन्वाचा वदति सेयमेव प्राणमप्येति १४ न मनसा ध्यायति तदिदमेव प्राणमप्येति १५ न चक्षुषा पश्यति तदिदमेव प्राणमप्येति १६ न श्रोत्रेण शृणोति तदिदमेव प्राणमप्येति १७ तद्यदेतत्सर्वम्प्राणमेवाभिसमेति तस्मात्प्राण एव साम १८ स ह वै सामवित्स कृत्स्नं साम वेद य एवं वेद १९ तद्यदिदमाहुर्न बताद्य वातीति स हैतत्पुरुषेऽन्तर्निरमते स पूर्णस्स्वेदमान आस्ते २० तद्ध शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्ब्राह्मणः परिवेविष्यमाणा उपाववाज २१ १

प्रथमेऽनुवाके प्रथमः खगडः

तौ ह बिभिक्षे तं ह नाददाते को वा को वेति मन्यमानौ १ तौ होपजगौ महात्मनश्चतुरो देव एकः कस्स जगार भुवनस्य गोपाः तं कापेय न विजानन्त्येकेऽभिप्रतारिन्बहुधा निविष्टमिति २ स होवाचाभिप्रतारीमं वाव प्रपद्य प्रतिब्रूहीति त्वया वा अयम्प्रत्युच्य इति ३ तं ह प्रत्युवाच आत्मा देवानामुत मर्त्यानां हिरगयदन्तो रपसो न सूनुः महान्तमस्य महिमानमाहुरनद्यमानो यददन्तमत्तीति ४ महात्मनश्चतुरो देव एक इति वाग्वा अग्निः स महात्मा देवः स यत्र स्वपिति तद्वाचम्प्राणो गिरति ५ मनश्चन्द्रमास्स महात्मा देवः स यत्र स्वपिति तन्मनः प्राणो गिरति ६ चक्षुरादित्यस्स महात्मा देवः स यत्र स्वपिति तच्चक्षुः प्राणो गिरति ७ श्रोत्रं दिशस्ता महात्मानो देवाः स यत्र स्वपिति तच्छ्रोत्रम्प्राणो गिरति ८ तद्यन्महात्मनश्चतुरो देव एक इत्येतद्ध तत् ९ कस्स जगारेति प्रजापतिर्वै कः स हैतज्जगार १० भुवनस्य गोपा इति स उ वाव भुवनस्य गोपाः ११ तं कापेय न विजानन्त्येक इति न ह्येतमेके विजानन्ति १२ अभिप्रतारिन्बहुधा निविष्टमिति बहुधा ह्येवैष निविष्टो यत्प्राणः १३ आत्मा देवानामुत मर्त्यानामिति आत्मा ह्येष देवानामुत मर्त्यानाम् १४ हिरगयदन्तो रपसो न सूनुरिति न ह्येष सूनुः सूनुरूपो ह्येष सन्न सूनुः १५ महान्तमस्य महिमानमाहुरिति महान्तं ह्येतस्य महिमानमाहुः १६ अनद्यमानो यददन्तमत्तीति अनद्यमानो ह्येषोऽदन्तमत्ति १७ २

प्रथमेऽनुवाके द्वितीयः खगडः

तस्यैष श्रीरात्मा समुद्रूढो यदसावादित्यः तस्माद्गायत्रस्य स्तोत्रेणावान्या-न्नेच्छ्रिया अवछिद्या इति १ स एष एवोक्थं यत्पुरस्तादवानिति तदेतदुक्थस्य शिरो यद्दक्षिणतस्स दक्षिणः पक्षो यदुत्तरतस्स उत्तरः पक्षो यत्पश्चात्तत्पुच्छम् २ अयमेव प्राण उक्थस्यात्मा स य एवमेतमुक्थस्यात्मानमात्मन्प्रतिष्ठितं वेद स हामुष्मिंल्लोके साङ्गस्सतनुस्सर्वस्सम्भवति ३ शश्वद्ध वा अमुष्मिंल्लोके यदिदम्पुरुषस्याण्डौ शिश्नं कर्णौ नासिके यत्किं चानस्थिकं न सम्भवति ४ अथ य एवमेतमुक्थस्यात्मानमात्मन्प्रतिष्ठितं वेद स हैवामुष्मिंल्लोके साङ्ग-स्सतनुस्सर्वस्सम्भवति ५ तदेतद्वैश्वामित्रमुक्थं तदन्नं वै विश्वम्प्राणो मित्रम् ६ तद्ध विश्वामित्रश्श्रमेण तपसा व्रतचर्येणेन्द्रस्य प्रियं धामोपजगाम ७ तस्मा उ हैतत्प्रोवाच यदिदम्मनुष्यानागतम् ८ तद्ध स उपनिषसाद ज्योतिरे-तदुक्थमिति ९ ज्योतिरिति द्वे अक्षरे प्राण इति द्वे अन्नमिति द्वे तदेतदन्न एव प्रतिष्ठितम् १० अथ हैनं जमदग्निरुपनिषसादायुरेतदुक्थमिति ११ आयुरिति द्वे अक्षरे प्राण इति द्वे अन्नमिति द्वे तदेतदन्न एव प्रतिष्ठितम् १२ अथ हैनं वसिष्ठ उपनिषसाद गौरेतदुक्थमिति तदेतदन्नमेव अन्नं हि गौः १३ तदाहुर्यदस्य प्राणस्य पुरुषश्शरीरमथ केनान्ये प्रानाश्शरीरवन्तो भवन्तीति १४ स ब्रूयाद्यद्वाचा वदति तद्वाचश्शरीरं यन्मनसा ध्यायति तन्मनसश्शरीरं यच्चक्षुषा पश्यति तच्चक्षुषश्शरीरं यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरमेवमु हान्ये प्राणाश्शरीरवन्तो भवन्तीति १५ ३

प्रथमेऽनुवाके तृतीयः खण्डः

तदेतदुक्थं सप्तविधं शस्यते स्तोत्रियोऽनुरूपो धाय्या प्रगाथस्सूक्तं निवि-त्परिधानीया १ इयमेव स्तोत्रियोऽग्निरनुरूपो वायुर्धाय्यान्तरिक्षम्प्रगाथो द्यौ-स्सूक्तमादित्यो निवित्तस्माद्बह्वृचा उदिते निविदमधीयन्ते आदित्यो हि निवित् दिशः परिधानीयेत्यधिदेवतम् २ अथाध्यात्ममात्मैव स्तोत्रियः प्रजानुरूपः प्राणो धाय्या मनः प्रगाथश्शिरस्सूक्तं चक्षुर्निविच्छ्रोत्रम्परिधानीया ३ तद्धैत-देके त्रिष्टुभा परिदधत्यनुष्टुभैके त्रिष्टुभा त्वेव परिदध्यात् ४ तद्धैतदेक एता व्याहृतीरभिव्याहृत्य शंसन्ति महान्मह्या समधत्त देवो देव्या समधत्त ब्रह्म ब्राह्मण्या समधत्त तद्यत्समधत्त समधत्तेति ५ तस्मादिदानीम्पुरुषस्य शरीराणि प्रतिसंहितानि पुरुषो ह्येतदुक्थम् ६ महान्मह्या समधत्तेति अग्निर्वै महानियमेव मही ७ देवो देव्या समधत्तेति वायुर्वै देवोऽन्तरिक्षं देवी ८ ब्रह्म ब्राह्मण्या

समधत्तेति ग्रादित्यो वै ब्रह्म द्यौर्ब्राह्मणी ९ तासां वा एतासां देवतानां द्वयोर्द्वयोर्देवतयोर्नवनवाक्षराणि सम्पद्यन्ते एतदिमे लोकास्त्रिणवा भवन्ति १० तद्ब्रह्म वै त्रिवृत्तद्ब्रह्माभिव्याहृत्य शंसन्ति एष उ एव स्तोमस्सोऽनुचरः ११ यदिममाहुरेकस्तोम इत्ययमेव योऽयम्पवते एषोऽधिदेवतं प्राणोऽध्यात्मं तस्य शरीरमनुचरः १२ तद्यथा ह वै मणौ मणिसूत्रं सम्प्रोतं स्याद् १३ ४

प्रथमेऽनुवाके चतुर्थः खगडः

एवं हैतस्मिन्सर्वमिदं सम्प्रोतं गन्धर्वाप्सरसः पशवो मनुष्याः १ तद्ध मुञ्जस्सा-मश्रवसः प्रययौ तस्मै ह श्वाजनिर्वैश्यः प्रेयाय २ तस्य हान्तरिक्षात्पतित्वा नवनीतपिगड उरसि निपपात तं हादायानुदधौ ३ ततो हैव स्तोमं ददर्शान्तरिक्षे विततम्बहु शोभमानं तस्यो ह युक्तिं ददर्श ४ बहिष्पवमानमासद्य टीत्र वियि प्रागय इति कूर्यात्टीत्र गृहित्र ग्रपान्य इति वाचा दिदृक्षेतैवाक्षिभ्यं शुश्रूषेतैव कर्णाभ्यां स्वयमिदम्मनोयुक्तम् ५ तद्यत्र वा इषुरत्यग्रो भवति न वै स ततो हिनस्ति तदु वा एतं नोपाप्नुयात् प इत्येवापान्यात्तद्यथा बिम्बेन मृगमानयेदे वमेवैनमेतया देवतयानयति स युक्तः करोति एष एवापि युक्तः ६ ५

प्रथमेऽनुवाके पञ्चमः खगडः

प्रथमोऽनुवाकस्समाप्तः

योऽसौ साम्नः प्रत्तिं वेद प्र हास्मै दीयते १ ददा इति ह वा ग्रयमग्निर्दीप्यते तथेति वायुः पवते हन्तेति चन्द्रमा ग्रोमित्यादित्यः २ एषा ह वै साम्नः प्रत्तिः एतां ह वै साम्नः प्रत्तिं सुदक्षिणः क्षैमिर्विदां चकार ३ तां हैतां होतुर्वाज्ये गायेन्मैत्रावरुणस्य वा तां ददा३ तथा३ हन्ता३ हिम्भा ग्रोवा इति प्र ह वा ग्रस्मै दीयते ४ सोऽप्यन्यान्बहूनुपर्युपरि य एवमेतां साम्नः प्रत्तिं वेद ५ य उ ह वा ग्रबन्धुर्बन्धुमत्साम वेद यत्र हाप्येनं न विदुर्यत्र रोषन्ति यत्र परीव चक्षते तद्धापि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्पर्येति ६ ग्रग्निर्ह वा ग्रबन्धुर्बन्धुमत्साम कस्माद्वा ह्येनं दार्वोः कस्माद्वा पर्यावृत्य मन्थन्ति स श्रैष्ठ्यायाधिपत्याया-न्नाद्याय पुरोधायै जायते ७ स यत्र ह वा ग्रप्येवंविदं न विदुर्यत्र रोषन्ति यत्र परीव चक्षते तद्धापि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्पर्येति ८ ६

द्वितीयेऽनुवाके प्रथमः खगडः

स्वयमु तत्र यत्रैनं विदुः १ सुदक्षिणो ह वै क्षैमिः प्राचीनशालिर्जाबालौ ते ह सब्रह्मचारिण आसुः २ ते हेमे बहु जप्यस्य चान्यस्य चानूचिरे प्राचीनशालिश्च जाबालौ च ३ अथ ह स्म सुदक्षिणः क्षैमिर्यदेव यज्ञस्याज्ञो यत्सुविदितं तद्ध स्मैव पृच्छति ४ त उ ह वा अपोदिता व्याक्रोशमानाश्चेरुश्शूद्रो दुरनूचान इति ह स्म सुदक्षिणं क्षैमिमाक्रोशन्ति प्राचीनशालिश्च जाबालौ च ५ स ह स्माह सुदक्षिणः क्षैमिर्यत्र भूयिष्ठाः कुरुपञ्चालास्समाश्रता भवितारस्तन्न एष संवादो नानुपदृष्टे शूद्रा इव संवदिष्यामह इति ६ ता उ ह वै जाबालौ दिदीक्षाते शुक्रश्च गोश्रुश्च तयोर्ह प्राचीनशालिर्वृत उद्गाता ७ स तद्ध सुदक्षिणोऽनुबुबुधे जाबालौ हादीक्षिषातामिति स ह संग्रहीतारमुवाचानयस्वारे जाबालौ हादीक्षिषातां तद्गमिष्याव इति ८ ७

द्वितीयेऽनुवाके द्वितीयः खण्डः

तस्य ह ज्ञातिका अश्रुमुखा इवासुरन्यतरां वा अयमुपागादिति १ अथ ह स्म वै यः पुरा ब्रह्मवाद्यं वदत्यन्यतरामुपागादिति ह स्मैनम्मन्यन्ते अथो ह स्मैनम्मृतमिवैवोपासते २ तं ह संग्रहीतोवाचाथ यद्भगवस्ते ताभ्यां न कुशलं कथेत्थमात्थेति ३ ओमिति होवाच गन्तव्यम्म आचार्यस्सुयमानमन्यतेति ४ स ह रथमास्थाय प्रधावयां चकार तं ह स्म प्रतीक्षन्ते ५ कं जानीतेति सुदक्षिण इति न वै नूनं स इदमभ्यवेयादिति स एवेति ६ स ह सोपानादेवान्तर्वेद्यवस्थायोवाचाङ्ग न्वित्थं गृहपता३ इति तं ह नानूदतिष्ठासत् स होवाचानूत्थाता म एधि कृष्णाजिनोऽसी ति तदिमे कुरुपञ्चाला अविदुरनूत्थातैव त इति होचुः ७ तं ह कनीयान्भ्रातोवाचानूत्तिष्ठ भगव उद्गातारमिति तं हानूत्तस्थौ ८ स होवाच त्रिर्वै गृहपते पुरुषो जायते पितुरेवाग्रेऽधि जायतेऽथ मातुरथ यज्ञात् ९ त्रिर्वेव म्रियत इति स यद्ध वा एनमेतत्पिता योन्यां रेतो भूतं सिञ्चति १० ८

द्वितीयेऽनुवाके तृतीयः खण्डः

तत्प्रथमम्म्रियते १ अन्धमिव वै तमो योनिः लोहितस्तोको वा वै स तदाभवत्यपां वा स्तोकः किं हि स तदाभवति २ स यस्तां देवतां वेद यां च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ३ अथ य एनमेतद्दीक्षयन्ति तद्द्वितीयम्म्रियते वपन्ति केशश्मश्रूणि निकृन्तन्ति

नखान्प्रत्यञ्चन्त्यङ्गानि प्रत्यचत्यङ्गुलीः अपवृतोऽपवेष्टित आस्ते न जुहोति न यजते न योषितं चरति अमानुषीं वाचं वदति मृतस्य वावैष तदा रूपम्भवति ४ स यस्तां देवतां वेद यां च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ५ अथ य एनमेतदस्माल्लोकात्प्रेतं चित्यामादधति तद्तृतीयम्म्रियते ६ स यस्तां देवतां वेद यां च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ७ एतावद्धैवोक्त्वा रथमास्थाय प्रधावयां चकार ८ तं ह जाबालम्प्रत्येतं कनीयान्भ्रातोवाच काम्भवञ्छूद्रको वाचमवादीति हस्तिना गाधमैषीरिति ९ प्र हैवैनं तच्छशंस यः कथमवोचद्भगव इति यस्त्रयाणाम्मृत्यूनां साम्नातिवाहं वेद स उद्गाता मृत्युमतिवहतीति १० ९

द्वितीयेऽनुवाके चतुर्थः खगडः

तं वाव भगवस्ते पितोद्गातारममन्यतेति होवाच तदु ह प्राचीनशाला विदुर्य एषामयं वृत उद्गातास तस्मिन्ह नानुविदुः १ ते होचुरनुधावत कागड्वियमिति तं हानुसस्नुः ते ह कागड्वियमुद्गातारं चक्रिरे ब्रह्माणम्प्राचीनशालिम् २ तं हाभ्यवेद्योवाचैवमेष ब्राह्मणो मोघाय वादाय नाग्लायत् स नाणु साम्नोऽन्विच्छतीति अति हैवैनं तच्चक्रे ३ स यद्ध वा एनमेतत्पिता योन्यां रेतो भूतं सिञ्चत्यादित्यो हैनं तद्योन्यां रेतो भूतं सिञ्चति स हास्य तत्र मृत्योरीशे ४ अथो यदेवैनमेतत्पिता योन्यां रेतो भूतं सिञ्चति तद्ध वाव स ततोऽनुसम्भवति प्राणं च यदा ह्येव रेतस्सिक्तम्प्राण आविशत्यथ तत्सम्भवति ५ अथो यदेवैनमेतद्दीक्षयन्त्यग्निर्हैवैनं तद्योन्यां रेतो भूतं सिञ्चति स हैवास्य तत्र मृत्योरीशे ६ अथो यामेवैतां वैसर्जनीयामाहुतिमध्वर्युर्जुहोति तामेव स ततोऽनुसम्भवति छन्दांसि चैव ७ अथ य एनमेतदस्माल्लोकात्प्रेतं चित्यामादधति चन्द्रमा हैवैनं तद्योन्यां रेतो भूतां सिञ्चति स उ हैवास्य तत्र मृत्योरीशे ८ अथो यदेवैनमेतदस्माल्लोकात्प्रेतं चित्यामादधत्यथो या एवैता अवोक्षणीया आपस्ता एव स ततोऽनुसम्भवति प्राणम्वेव प्राणो ह्यापः ९ तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणादित्यम्मृत्युमतिवहति वागित्यग्निं हुमिति वायुम्भा इति चन्द्रमसम् १० तान्वा एतान्मृत्यून्साम्नोद्गातात्मानं च यजमानं चातिवहत्योमित्येतेनाक्षरेण प्राणेनामुनादित्येन ११ तस्यैष श्लोक उतैषां ज्येष्ठ उत वा कनिष्ठ उतैषाम्पुत्र उत वा पितैषामेको ह देवो मनसि प्रविष्टः पूर्वो ह

जज्ञे स उ गर्भेऽन्तरिति १२ तद्यदेषोऽभ्युक्त इममेव पुरुषं योऽयमाछन्नोऽन्तरो-
मित्येतेनैवाक्षरेण प्राणेनैवामुनैवादित्येन १३ १०

द्वितीयेऽनुवाके पञ्चमः खण्डः

द्वितीयोऽनुवाकस्समाप्तः

त्रिर्ह वै पुरुषो म्रियते त्रिर्जायते १ स हैतदेव प्रथमम्म्रियते यद्रेतस्सिक्तं सम्भूत-
म्भवति स प्राणमेवाभिसम्भवति आशामभिजायते २ अथैतद्द्वितीयम्म्रियते
यद्दीक्षते स छन्दांस्येवाभिसम्भवति दक्षिणामभिजायते ३ अथैतत्तृतीयम्म्रियते
यन्म्रियते स श्रद्धामेवाभिसम्भवति लोकमभिजायते ४ तदेतत्त्र्यावृद्गायत्रं
गायति तस्य प्रथमयावृतेममेव लोकं जयति यदु चास्मिंल्लोके तदेतेन
चैनम्प्राणेन समर्धयति यमभिसम्भवत्येतां चास्मा आशाम्प्रयच्छति याम-
भिजायते ५ अथ द्वितीययावृतेदमेवान्तरिक्षं जयति यदु चान्तरिक्षे तदेतैश्चैनं
छन्दोभिस्समर्धयति यान्यभिसम्भवति एतां चास्मै दक्षिणाम्प्रयच्छति
यामभिजायते ६ अथ तृतीययावृतामुमेव लोकंजयति यदु चामुष्मिंल्लोके
तदेतया चैनं श्रद्धया समर्धयति ययैवैनमेतच्छ्रद्धयाग्नावभ्यादधति समयमि
तो भविष्यतीति एतं चास्मै लोकम्प्रयच्छति यमभिजायते ७ ११

तृतीयेऽनुवाके प्रथमः खण्डः

एतद्वै तिसृभिरावृद्भिरिमांश्च लोकाञ्जयत्येतैश्चैनम्भूतैस्समर्धयति यान्यभिस-
म्भवति १ अथ वा अतो हिङ्कारस्यैव तं ह स्वर्गे लोके सन्तम्मृत्युरन्वेत्यशनया
२ श्रीर्वा एषा प्रजापतिस्साम्नो यद्धिङ्कारः तमिदुद्गाता श्रिया प्रजापतिना
हिङ्कारेण मृत्युमपसेधति ३ हुम्मेत्याह मात्र नु गा यत्रैतद्यजमान इति हैतत् ४
स यथा श्रेयसा सिद्धः पापीयान्प्रतिविजत एवं हैवास्मान्मृत्युः पाप्मा
प्रतिविजते ५ यन्मेत्याह चन्द्रमा वै मा मासः एष ह वै मा मासः तस्मान्मेत्याह
भा इति हैतत्परोक्षेणेव यस्माद्वेव मेत्याह यद्वेव मेत्याहैतानि त्रीणि तस्मा-
न्मेत्य्ब्रूयात् ६ १२

तृतीयेऽनुवाके द्वितीयः खण्डः

हुम्भा इति ब्रह्मवर्चसकामस्य भतीव हि ब्रह्मवर्चसम् १ हुम्बो इति पशुकामस्य
बो इति ह पशवो वाश्यन्ते २ हुम्बगिति श्रीकामस्य बगिति ह श्रियम्पणायन्ति

३ हुम्भा ग्रोवा इत्येतदेवोपगीतम् ४ महदिवाभिपरिवर्तयन्गायेदिति ह स्माह नाको महाग्रामो महानिवेशो भवतीति स यथा स्थाणुमर्पयित्वेतरेण वेतरेण वा परियायात्तादृक्तत् ५ तदु होवाच शाट्यायनिः कस्मै कामाय स्थाणुमर्पयेत् अथोपगीतमेवैतत् नैवैतदाद्रियेतेति ६ इति नु हिङ्कारानां अथ वा अतो निधनमेव ओवा इति द्वे अक्षरे अन्तो वै साम्नो निधनमन्तस्स्वर्गो लोकानामन्तो ब्रध्नस्य विष्टपम् ७ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणान्ते स्वर्गे लोके दधाति ८ य उ ह वा अपक्षो वृक्षाग्रं गच्छत्यव वै स ततः पद्यते अथ यद्वै पक्षी वृक्षाग्रे यदसिधारायां यत्क्षुरधारायामास्ते न वै स ततोऽवपद्यते पक्षाभ्यां हि संयत आस्ते ९ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण स्वरपक्षं कृत्वान्ते स्वर्गे लोके दधाति स यथा पक्ष्यबिभ्यदासीतैवमेव स्वर्गे लोकेऽबिभ्यदास्तेऽथाचरति १० ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च आदित्यश्च ह वा एते अक्षरे चन्द्रमाश्च ११ आदित्य एव देवलोकश्चन्द्रमा मनुष्यलोकः ओमित्यादित्यो वागिति चन्द्रमाः १२ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणादित्यं देवलोकं गमयति १३ १३

तृतीयेऽनुवाके तृतीयः खगडः

तं हागतम्पृच्छति कस्त्वमसीति स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाह यस्तेऽयम्मय्यात्माभूदेष ते स इति १ तस्मिन्हात्मन्प्रतिपत्तमृतवस्सम्पदार्यपद्गृहीतमपकर्षन्ति तस्य हाहोरात्रे लोकमाप्नुतः २ तस्मा उ हैतेन प्रब्रुवीत कोऽहमस्मि सुवस्त्वं स त्वां स्वर्ग्यं स्वरगामिति ३ को ह वै प्रजापतिरथ हैवंविदेव सुवर्गः स हि सुवर्गच्छति ४ तं हाह यस्त्वमसि सोऽहमस्मि योऽहमस्मि स त्वमस्येहीति ५ स एतमेव सुकृतरसम्प्रविशति यदु ह वा अस्मिंल्लोके मनुष्या यजन्ते यत्साधु कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति तदमुं चन्द्रमसम्मनुष्यलोकम्प्रविशति ६ तस्येदम्मानुषनिकाशनमगडमुदरेऽन्तस्सम्भवति तस्योर्ध्वमन्नाद्यमुत्सीदति स्तनावभि स यदाजायतेऽथास्मै माता स्तनमन्नाद्यम्प्रयच्छति ७ अजातो ह वै तावत्पुरुषो यावन्न यजते स यज्ञेनैव जायते स यथागडम्प्रथमनिर्भिगणमेवमेव ८ तदा तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणादित्यं देवलोकं गमयति वागित्यस्मा उत्तरेणाक्षरेण चन्द्रमसमन्नाद्यमक्षितिम्प्रयच्छति ९ अथ यस्यैतदविद्वानुद्गायति न हैवैनं देवलोकं गमयति नो एनमन्नाद्येन समर्धयति १० स यथागडं विदिग्धं शयी-

तान्नाद्यमलभमानमेवमेव विदिग्धश्शेतेऽन्नाद्यमलभमानः ११ तस्मादु हैवंवि-
दमेवोद्गापयेत एवंविदिहैवोद्गातरिति हूतः प्रतिशृणुयात् १२ १४
तृतीयेऽनुवाके पञ्चमः खण्डः
तृतीयोऽनुवाकस्समाप्तः

वागिति हेन्द्रो विश्वामित्रायोक्थमुवाच तदेतद्विश्वामित्रा उपासते वाचमेव १
मनुर्ह वसिष्ठाय ब्रह्मत्वमुवाच तस्मादाहुर्वासिष्ठमेव ब्रह्मेति २ तदु वा आहु-
रेवंविदेव ब्रह्मा क उ एवंविदं वासिष्ठमर्हतीति ३ प्रजापतिः प्राजिजनिषत
स तपोऽतप्यत स ऐक्षत हन्त नु प्रतिष्ठां जनयै ततो याः प्रजास्स्रक्ष्ये ता एतदेव
प्रतिष्ठास्यन्ति नाप्रतिष्ठाश्चरन्तीः प्रदघिष्यन्त इति ४ स इमं लोकमजनय-
दन्तरिक्षलोकममुं लोकमिति तानिमांस्त्रींल्लोकाञ्जनयित्वाभ्यश्राम्यत् ५
तान्समतपत्तेभ्यस्संतप्तेभ्यस्त्रीणि शुक्राण्युदायन्नग्निः पृथिव्या वायुरन्तरिक्षा-
दादित्यो दिवः ६ स एतानि शुक्राणि पुनरभ्येवातपत्तेभ्यस्संतप्तेभ्यस्त्रीण्येव
शुक्राण्युदायन्नृग्वेद एवाग्नेर्यजुर्वेदो वायोस्सामवेद आदित्यात् ७ स एतानि
शुक्राणि पुनरभ्येवातपत्तेभ्यस्संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्भूरित्येवर्ग्वेदा-
द्भुव इति यजुर्वेदात्स्वरिति सामवेदात्तदेव ८ तद्ध वै त्रय्यै विद्यायै शुक्र-
मेतावदिदं सर्वं स यो वै त्रयीं विद्यां विदुषो लोकस्सोऽस्य लोको भवति य
एवं वेद ९ १५
चतुर्थेऽनुवाके प्रथमः खण्डः

अयं वाव यज्ञो योऽयम्पवते तस्य वाक्च मनश्च वर्तन्यौ वाचा च ह्येष एतन्मनसा
च वर्तते १ तस्य होताध्वर्युरुद्गातेत्यन्यतरां वाचा वर्तनिं संस्कुर्वन्ति तस्मात्ते
वाचा कुर्वन्ति ब्रह्मैव मनसान्यतरां तस्मात्स तूष्णीमास्ते २ स यद्ध सोऽपि
स्तूयमाने वा शस्यमाने वा वावद्यमान आसीतान्यतरामेवास्यापि तर्हि स
वाचा वर्तनिं संस्कुर्यात् ३ स यथा पुरुष एकपाद्यन्भ्रेषन्नेति रथो वैकचक्रो
वर्तमान एवमेव तर्हि यज्ञो भ्रेषन्नेति ४ एतद्ध तद्विद्वान्ब्राह्मण उवाच ब्रह्माण-
म्प्रातरनुवाक उपाकृते वावद्यमानमासीनमर्धं वा इमे तर्हि यज्ञस्यान्तरगुरिति
अर्धं हि ते तर्हि यज्ञस्यान्तरीयुः ५ तस्माद्ब्रह्मा प्रातरनुवाक उपाकृते वाचंयम
आसीतापरिधानीयाया आ वषट्कारादितरेषां स्तुतशस्त्राणामेवासंस्थायै
पवमानानाम् ६ स यथा पुरुष उभयापाद्यन्भ्रेषं न न्येति रथो वोभयाचक्रो

वर्तमान एवमेतर्हि यज्ञो भ्रेषं न न्येति ७ १६

चतुर्थेऽनुवाके द्वितीयः खराडः

स यदि यज्ञ ऋक्तो भ्रेषन्नियाद्ब्रह्मणे प्रब्रूतेत्याहुः अथ यदि यजुष्टो ब्रह्मणे प्रब्रूतेत्याहुः अथ यदि सामतो ब्रह्मणे प्रब्रूतेत्याहुः अथ यदि अनुपस्मृतात्कुत इदमजनीति ब्रह्मणे प्रब्रूतेत्येवाहुः १ स ब्रह्मा प्राङुदेत्य स्रुवेणाग्नीध्र आज्यं जुहुयाद्भूर्भुवस्स्वरित्येताभिर्व्याहृतिभिः २ एता वै व्याहृतयस्सर्वप्रायश्चित्तयः तद्यथा लवणेन सुवर्णं संदध्यात्सुवर्णेन रजतं रजतेन त्रपु त्रपुणा लोहायसं लोहायसेन कार्ष्णायसं कार्ष्णायसेन दारु दारु च चर्म च श्लेष्मणैवमेवैवं विद्वांस्तत्सर्वम्भिषज्यति ३ तदाहुर्यदहौषीन्मे ग्रहान्मेऽग्रहीदित्यध्वर्यवे दक्षिणा नयन्त्यशंसीन्मे वषडकर्म इति होत्र उदगासीन्म इत्युद्गात्रेऽथ किं चक्रुषे ब्रह्मणे तूष्णीमासीनाय समावतीरेवेतरैर्ऋत्विग्भिर्दक्षिणा नयन्तीति ४ स ब्रूयादर्धभाग्घ वै स यज्ञस्यार्धं ह्येष यज्ञस्य वहतीति अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति अर्धा इतरेभ्य ऋत्विग्भ्यः ५ तस्यैष श्लोको मयीदम्मन्ये भुवनादि सर्वम्मयि लोका मयि दिशश्चतस्रः मयीदम्मन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा इति ६ मयीदम्मन्ये भुवनादि सर्वमित्येवंविदं ह वावेदं सर्वम्भुवनमन्वायत्तम् ७ मयि लोका मयि दिशश्चतस्र इत्येवंविदि ह वाव लोका एवंविदि दिशश्चतस्रः ८ मयीदम्मन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा इत्येवंविदि ह वावेदं सर्वम्भुवनम्प्रतिष्ठितम् ९ तस्मादु हैवंविदमेव ब्रह्माणं कुर्वीत स ह वाव ब्रह्मा य एवं वेद १० १७

चतुर्थेऽनुवाके तृतीयः खराडः

अथ वा अतस्स्तोमभागानामेवानुमन्त्राः १ तद्धैतदेके स्तोमभागैरेवानुमन्त्रयन्ते तत्तथा न कुर्यात् २ देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्येत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानाम्प्रसविता सवित्रा प्रसूता इदमनुमन्त्रयामह इति वदन्तः तदु तथा न कुर्यात् ३ भूर्भुवस्स्वरित्यु हैकेऽनुमन्त्रयन्त एषा वै त्रयी विद्या त्रय्यैवेदं विद्ययानुमन्त्रयामह इति वदन्तः तदु तथा नो एव कुर्यात् ४ ओमित्येवानुमन्त्रयेत ५ अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्रः तेन हैतेन वसिष्ठः प्रजातिकामोऽनुमन्त्रयां चक्रे देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्य भूर्भुवस्स्वरोमिति ततो वै स बहुः प्रजया पशुभिः प्राजायत ६ स

एव तेन वसिष्ठस्यैकस्तोमभागानुमन्त्रेणानुमन्त्रयेत बहुरेव प्रजया पशुभिः प्रजायते इयं त्वेव स्थितिरोमित्येवानुमन्त्रयेत ७ १८

चतुर्थेऽनुवाके चतुर्थः खगडः

अथैष वाचा वज्रमुद्गृह्णाति यदाह सोमः पवत इति वोपावर्तध्वमिति वा वाचैव तद्वाचो वज्रं विगृह्यते वाचस्सत्येनातिमुच्यते तस्मादोमित्येवानुमन्त्रयेत १ देवा वा अनया त्रय्या विद्यया सरसयोर्ध्वास्स्वर्गं लोकमुदक्रामन्ते ममुष्याणामन्वागमाद्बिभ्यतस्त्रयं वेदमपीळयन् २ तस्य पीळयन्त एकमेवाक्षरं नाशक्नुवन्पीळयितुमोमिति यदेतत् ३ एष उ ह वाव सरसः सरसा ह वा एवंविदस्त्रयी विद्या भवति ४ स यां ह वै त्रय्या विद्यया सरसया जितिं जगति यामृद्धिमृध्नोति जयति तां जितिमृध्नोति तामृद्धिं य एवं वेद ५ एतद्ध वा अक्षरं त्रय्यै विद्यायै प्रतिष्ठा ओमिति वै होता प्रतिष्ठित ओमित्य-ध्वर्युरोमित्युद्गाता ६ एतद्ध वा अक्षरं वेदानां त्रिविष्टपमेतस्मिन्वा अक्षर ऋत्विजो यजमानमाधाय स्वर्गे लोके समुदूहन्ति तस्मादोमित्येवानुमन्त्रयेत ७ १९

चतुर्थेऽनुवाके पञ्चमः खगडः

चतुर्थोऽनुवाकस्समाप्तः

गुहासि देवोऽस्युपवास्युप तं वायस्व योऽस्मान्द्वेष्टि यं च वयं द्विष्मः १ महिनासि बहुलासि बृहत्यसि रोहिगयस्यपन्नासि २ सम्भूर्देवोऽसि समहम्भू-यासमाभूतिरस्याभूयासं भूतिरसि भूयासम् ३ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि उप ते ता दिशामि ४ नाम मे शरीरम्मे प्रतिष्ठा मे तन्मे त्वयि तन्मे मोपहृथा इतीमाम्पृथिवीमवोचत् ५ तमियमागतम्पृथिवी प्रतिनन्दत्ययं ते भगवो लोकः सह नावयं लोक इति ६ यद्वाव मे त्वयीत्याह तद्वाव मे पुन-र्देहीति ७ किं नु ते मयीति नाम मे शरीरम्मे प्रतिष्ठा मे तन्मे त्वयि तन्मे पुनर्देहीति तदस्मा इयम्पृथिवी पुनर्ददाति ८ तामाह प्र मा वाहेति किमभीति अग्निमिति तमग्निमभिप्रवहति ९ सोऽग्निमाहाभिजिदस्यभिजय्यासं लोक-जिदसि लोकं जय्यासमत्तिरस्यन्नमद्यासमन्नादो भवति यस्त्वैवं वेद १० सम्भू-र्देवोऽसि समहम्भूयासमाभूतिरस्याभूयासं भूतिरसि भूयासम् ११ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि उप ते ता दिशामि १२ तपो मे तेजो मेऽन्नम्मे

वाङ्मे तन्मे त्वयि तन्मे मोपहृथा इत्यग्निमवोचत् १३ तं तथैवागतमग्निः प्रतिन-
न्दत्ययं ते भगवो लोकस्सह नावयं लोक इति १४ यद्वाव मे त्वयीत्याह त-
द्वाव मे पुनर्देहीति १५ किं नु ते मयीति तपो मे तेजो मेऽन्नम्मे वाङ्मे तन्मे त्व-
यि तन्मे पुनर्देहीति तदस्मा अग्निर्पुनर्ददाति १६ तमाह प्र मा वहेति १७ २०
पञ्चमेऽनुवाके प्रथमः खण्डः

किमभीति वायुमिति तं वायुमभिप्रवहति १ स वायुमाह यत्पुरस्ताद्वासीन्द्रो
राजा भूतो वासि यद्दक्षिणतो वासीशानो भूतो वासि यत्पश्चाद्वासि वरुणो राजा
भूतो वासि यदुत्तरतो वासि सोमो राजा भूतो वासि यदुपरिष्टादववासि
प्रजापतिर्भूतोऽववासि २ व्रात्योऽस्येकव्रात्योऽनवसृष्टो देवानाम्बिलमप्यधाः
३ तव प्रजास्तवौषधयस्तवापो विचलितमनुविचलन्ति ४ सम्भूर्देवोऽसि
समहम्भूयासमाभूतिरस्याभूयासम्भूतिरसि भूयासम् ५ यास्ते प्रजा उपदिष्टा
नाहं तव ताः पर्येमि उप ते ता दिशामि ६ प्राणापानौ मे श्रुतम्मे तन्मे त्वयि
तन्मे मोपहृथा इति वायुमवोचत् ७ तं तथैवागतं वायुः प्रतिनन्दत्ययं ते
भगवो लोकः सह नावयं लोक इति ८ यद्वाव मे त्वयीत्याह तद्वाव मे
पुनर्देहीति ९ किं नु ते मयीति प्राणापानौ मे श्रुतम्मे तन्मे त्वयि तन्मे पुनर्देहीति
तदस्मै वायुः पुनर्ददाति १० तमाह प्र मा वहेति किमभीति अन्तरिक्षलोकमिति
तमन्तरिक्षलोकमभिप्रवहति ११ तं तथैवागतमन्तरिक्षलोकः प्रतिनन्दत्ययं ते
भगवो लोकः सह नावयं लोक इति १२ यद्वाव मे त्वयीत्याह तद्वाव मे
पुनर्देहीति १३ किं नु ते मयीति अयम्म आकाशः स मे त्वयि तन्मे पुनर्देहीति
तमस्मा आकाशमन्तरिक्षलोकः पुनर्ददाति १४ तमाह प्र मा वहेति १५ २१
पञ्चमेऽनुवाके द्वितीयः खण्डः

किमभीति दिश इति तं दिशोऽभिप्रवहति १ तं तथैवागतं दिशः प्रतिनन्दन्त्ययं
ते भगवो लोकः सह नोऽयं लोक इति २ यद्वाव मे युष्मास्वित्याह तद्वाव
मे पुनर्दत्तेति ३ किं नु तेऽस्मास्विति श्रोत्रमिति तदस्मै श्रोत्रं दिशः पुनर्ददति
४ ता आह प्र मा वहतेति किमभीति अहोरात्रयोर्लोकमिति तमहोरात्रयो-
र्लोकमभिप्रवहन्ति ५ तं तथैवागतमहोरात्रे प्रतिनन्दतोऽयं ते भगवो लोकः
सह नोऽयं लोक इति ६ यद्वाव मे युवयोरित्याह तद्वाव मे पुनर्दत्तमिति ७
किं नु त आवयोरिति अक्षितिरिति तामस्मा अक्षितिमहोरात्रे पुनर्दत्तः ८ ते

आह प्र मा वहतमिति ९ २२

पञ्चमेऽनुवाके तृतीयः खण्डः

किमभीति अर्धमासानिति तमर्धमासानभिप्रवहतः १ तं तथैवागतमर्धमासाः प्रतिनन्दन्त्ययं ते भगवो लोकः सह नोऽयं लोक इति २ यद्वाव मे युष्मा-स्वित्याह तद्वाव मे पुनर्दत्तेति ३ किं नु तेऽस्मास्विति इमानु क्षुद्राणि पर्वाणि तानि मे युष्मासु तानि मे प्रतिसंधत्तेति तान्यस्यार्धमासाः पुनः प्रतिसंदधति ४ तानाह प्र मा वहतेति किमभीति मासानिति तम्मासानभिप्रवहन्ति ५ तं तथैवागतम्मासाः प्रतिनन्दन्त्ययं ते भगवो लोकः सह नोऽयं लोक इति ६ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ७ किं नु तेऽस्मास्विति इमानि स्थूलानि पर्वाणि तानि मे युष्मासु तानि मे प्रतिसंधत्तेति तान्यस्य मासाः पुनः प्रतिसंदधति ८ तानाह प्र मा वहतेति ९ २३

पञ्चमेऽनुवाके चतुर्थः खण्डः

किमभीति ऋतूनिति तमृतूनभिप्रवहन्ति १ तं तथैवागतमृतवः प्रतिनन्दन्त्ययं ते भगवो लोकः सह नोऽयं लोक इति २ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ३ किं नु तेऽस्मास्विति इमानि ज्यायांसि पर्वाणि तानि मे युष्मासु तानि मे प्रतिसंधत्तेति तान्यस्यर्तवः पुनः प्रतिसंदधति ४ तानाह प्र मा वहतेति किमभीति संवत्सरमिति तं संवत्सरमभिप्रवहन्ति ५ तं तथैवागतं संवत्सरः प्रतिनन्दत्ययं ते भगवो लोकः सह नावयं लोक इति ६ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ७ किं नु ते मयीति अयम्म आत्मा स मे त्वयि तन्मे पुनर्देहीति तमस्मा आत्मानं संवत्सरः पुनर्ददाति ८ तमाह प्र मा वहेति ९ २४

पञ्चमेऽनुवाके पञ्चमः खण्डः

किमभीति दिव्यान्गन्धर्वानिति तं दिव्यान्गन्धर्वानभिप्रवहति १ तं तथैवागतं दिव्या गन्धर्वाः प्रतिनन्दन्त्ययं ते भगवो लोकः सह नोऽयं लोक इति २ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ३ किं नु तेऽस्मास्विति गन्धो मे मोदो मे प्रमोदो मे तन्मे युष्मासु तन्मे पुनर्दत्तेति तदस्मै दिव्या गन्धर्वाः पुनर्ददति ४ तानाह प्र मा वहतेति किमभीति अप्सरस इति तमप्सरसोऽभिप्रवहन्ति ५ तं

तथैवागतमप्सरसः प्रतिनन्दन्त्ययं ते भगवो लोकः सह नोऽयं लोक इति ६ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ७ किं नु तेऽस्मास्विति हसो मे क्रीळा मे मिथुनम्मे तन्मे युष्मासु तन्मे पुनर्दत्तेति तदस्मा अप्सरसः पुनर्ददति ८ ता आह प्र मा वहतेति ९ २५

पञ्चमेऽनुवाके षष्ठः खराडः

किमभीति दिवमिति तं दिवमभिप्रवहन्ति १ तं तथैवागतं द्यौः प्रतिनन्दत्ययं ते भगवो लोकः सह नावयं लोक इति २ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ३ किं नु ते मयीति तृप्तिरिति सकृत्तृप्तेव ह्येषा तामस्मै तृप्तिं द्यौः पुनर्ददाति ४ तमाह प्र मा वहेति किमभीति देवानिति तं देवानभिप्रवहति ५ तं तथैवागतं देवाः प्रतिनन्दन्त्ययं ते भगवो लोकः सह नोऽयं लोक इति ६ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ७ किं नु तेऽस्मास्विति अमृतमिति तदस्मा अमृतं देवाः पुनर्ददति ८ तानाह प्र मा वहतेति ९ २६

पञ्चमेऽनुवाके सप्तमः खराडः

किमभीति आदित्यमिति तमादित्यमभिप्रवहन्ति १ स आदित्यमाह विभूः पुरस्तात्सम्पत्पश्चात् सम्यङ्त्वमसि समीचो मनुष्यानरोषी रुषतस्त ऋषिः पाप्मानं हन्ति अपहतपाप्मा भवति यस्त्वैवं वेद २ सम्भूर्देवोऽसि समह-म्भूयासमाभूतिरस्याभूयासम्भूतिरसि भूयासम् ३ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि उप ते ता दिशामि ४ ओजो मे बलम्मे चक्षुर्मे तन्मे त्वयि तन्मे मोपहृथा इत्यादित्यमवोचत् ५ तं तथैवागतमादित्यः प्रतिनन्दत्ययं ते भगवो लोकः सह नावयं लोक इति ६ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ७ किं नु ते मयीति ओजो मे बलम्मे चक्षुर्मे तन्मे त्वयि तन्मे पुनर्देहीति तदस्मा आदित्यः पुनर्ददाति ८ तमाह प्र मा वहेति किमभीति चन्द्रमसमिति तं चन्द्रमसमभिप्रवहति ९ स चन्द्रमसमाह सत्यस्य पन्था न त्वा जहाति अमृतस्य पन्था न त्वा जहाति १० नवोनवो भवसि जायमानो भरो नाम ब्राह्मण उपास्से तस्मात्ते सत्या उभये देवमनुष्या अन्नाद्यम्भरन्ति अन्नादो भवति यस्त्वैवं वेद ११ सम्भूर्देवोऽसि समहम्भूयासमाभूतिरस्याभू-यासम्भूतिरसि भूयासम् १२ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि उप ते ता दिशामि १३ मनो मे रेतो मे प्रजा मे पुनस्सम्भूतिर्मे तन्मे त्वयि तन्मे

मोपह्वथा इति चन्द्रमसमवोचत् १४ तं तथैवागतं चन्द्रमाः प्रतिनन्दत्ययं ते भगवो लोकः सह नावयं लोक इति १५ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति १६ किं नु ते मयीति मनो मे रेतो मे प्रजा मे पुनस्सम्भूतिर्मे तन्मे त्वयि तन्मे पुनर्देहीति तदस्मै चन्द्रमाः पुनर्ददाति १७ तमाह प्र मा वहेति १८ २७

पञ्चमेऽनुवाकेऽष्टमः खण्डः

किमभीति ब्रह्मणो लोकमिति तमादित्यमभिप्रवहति १ स आदित्यमाह प्र मा वहेति किमभीति ब्रह्मणो लोकमिति तं चन्द्रमसमभिप्रवहति स एवमेते देवते अनुसंचरति २ एसोऽन्तोऽतः परः प्रवाहो नास्ति यानु कांश्चातः प्राचो लोकानभ्यवादिष्म ते सर्व आप्ता भवन्ति ते जितास्तेष्वस्य सर्वेषु कामचारो भवति य एवं वेद ३ स यदि कामयेत पुनरिहाजायेयेति यस्मिन्कुले-ऽभिध्यायेद्यदि ब्राह्मणकुले यदि राजकुले तस्मिन्नाजायते स एतमेव लोकम्पुनः प्रजानन्नभ्यारोहन्नेति ४ तदु होवाच शाटचायनिर्बहुव्याहितो वा अयम्बहुशो लोकः एतस्य वै कामाय नु ब्रुवते वा श्राम्यन्ति वा क एतत्प्रास्य पुनरिहेयादत्रैव स्यादिति ५ २८

पञ्चमेऽनुवाके नवमः खण्डः पञ्चमोऽनुवाकस्समाप्तः

उच्चैश्श्रवा ह कौपयेयः कौरव्यो राजास तस्य ह केशी दाभ्र्यः पाञ्चालो राजा स्वस्त्रीय आस तौ हान्योन्यस्य प्रियावासतुः १ स होच्चैश्श्रवाः कौपये-योऽस्माल्लोकात्प्रेयाय तस्मिन्ह प्रेते केशी दाभ्र्योऽरण्ये मृगयां चचाराप्रियं विनिनीषमाणः २ स ह तथैव पल्ययमानो मृगान्प्रसरन्नन्तरेणैवोच्चैश्श्रवसं कौपयेयमधिजगाम ३ तं होवाच दृप्यामि स्वी३ज्ञानामीति न दृप्यसीति होवाच जानासि स एवास्मि यम्मा मन्यस इति ४ अथ यद्भगव आहुरिति होवाच य आविर्भवत्यन्येऽस्य लोकमुपयन्तीत्यथ कथमशको म आवि-र्भवितुमिति ५ ओमिति होवाच यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आविरभूवमप्रियं चास्य विनेष्याम्यनु चैनं शासिष्यामीति ६ तथा भगव इति होवाच तं वै नु त्वा परिष्वजा इति तं ह स्म परिष्वजमानो यथा धूमं वापीयाद्वायुं वाकाशं वाग्नयर्चिं वापो वैवं ह स्मैनं व्येति न ह स्मैनम्परिष्वङ्गायोपलभते ७ २९

षष्ठेऽनुवाके प्रथमः खगडः

स होवाच यद्वै ते पुरा रूपमासीत्तत्ते रूपं न तु त्वा परिष्वङ्गायोपलभ इति १ श्रोमिति होवाच ब्राह्मणो वै मे साम विद्वान्साम्नोदगायत् स मेऽशरीरेण साम्ना शरीराराग्यधूनोत्तद्यस्य वै किल साम विद्वान्साम्नोद्गायति देवतानामेव सलो-कतां गमयतीति २ पतङ्गः प्राजापत्य इति होवाच प्रजापतेः प्रियः पुत्र श्रास स तस्मा एतत्सामाब्रवीत्तेन स ऋृषीणामुदगायत्त एत ऋृषयो धूतशरीरा इति ३ एतेनो एव साम्नेति होवाच प्रजापतिर्देवानामुदगायत्त एत उपरि देवा धूतशरीरा इति ४ तस्मिन्हैनमनुशशास तं हानुशिष्योवाच यस्स्मैवैतत्साम विद्यात्स स्मैव त उद्गायत्विति ५ स हानुशिष्ट श्राजगाम स ह स्म कुरु-पञ्चालानाम्ब्राह्मणानुपपृच्छमानश्चरति ६ ३०

षष्ठेऽनुवाके द्वितीयः खगडः

व्यूढच्छन्दसा वै द्वादशाहेन यन्दयमाणोऽस्मि स यो वस्तत्साम वेद यदहं वेद स एव म उद्गास्यति मीमांसध्वमिति १ तस्मै ह मीमांसमानानामेकश्चन न सम्प्रत्यभिदधाति २ स ह तथैव पल्ययमानश्श्मशाने वा वने वावृतीशया-नमुपाधावयां चकार तं ह चायमानः प्रजहौ ३ तं होवाच कोऽसीति ब्राह्म-णोऽस्मि प्रातृदो भाल्ल इति ४ स किं वेत्थेति सामेति ५ श्रोमिति होवाच व्यूढच्छन्दसा वै द्वादशाहेन यन्दयमाणोऽस्मि स यदि त्वं तत्साम वेत्थ यदहं वेद त्वमेव म उद्गास्यसि मीमांसस्वेति ६ तस्मै ह मीमांसमानस्तदेव सम्प्र-त्यभिदधौ ७ तं होवाचायम्म उद्गास्यतीति ८ तस्मै ह कुरुपञ्चालानाम्ब्राह्मणा श्रसूयन्त श्राहुरेषु ह वा श्रयं कुल्येषु सत्सूद्गास्यति कस्मा श्रयमलमिति ९ श्रलम्वै मह्यमिति ह स्माह सैवालम्मस्यालम्मतायैतस्य हालमेवोज्जगौ तस्मादालम्यैलाजोद्गातेत्याख्यापयन्ति १० ३१

षष्ठेऽनुवाके तृतीयः खगडः

तद्ध सात्यकीर्ता श्राहुर्यां वयं देवतामुपास्महे एकमेव वयं तस्यै देवतायै रूपं गव्यादिशाम एकं वाहन एकं हस्तिन्येकम्पुरुष एकं सर्वेषु भूतेषु तस्या एवेदं देवतायै सर्वं रूपमिति १ तदेतदेकमेव रूपम्प्राण एव यावद्ध्येव प्राणेन प्राणिति तावद्रूपम्भवति तद्रूपम्भवति २ तदथ यदा प्राण उत्क्रामति दार्वेवेव

भूतोऽनर्थ्यः परिशिष्यते न किं चन रूपम् ३ तस्यान्तरात्मा तपः तस्मा-त्तप्यमानस्योष्णतरः प्राणो भवति ४ तपसोऽन्तरात्माग्निः स निरुक्तः तस्मात्स दहति ५ अथाधिदेवतमियमेवैषा देवता योऽयम्पवते तस्मिन्नेतस्मिन्नापोऽन्तः तदन्नं सोऽरूच्च उपासितव्यः यदस्मिन्नापोऽन्तस्तेनारूच्चः ६ तस्यान्तरात्मा तपस्तस्मादेष आतपत्युष्णतरः पवते ७ तपसोऽन्तरात्मा विद्युत् स निरुक्तः तस्मात्सोऽपि दहति ८ तानि वा एतानि चत्वारि साम प्राणो वाङ्मनस्स्वरः स एष प्रणो वाचा करोति मनोनेत्रः तस्य स्वर एव प्रजाः प्रजावान्भवति य एवं वेद ९ ३२

षष्ठेऽनुवाके चतुर्थः खण्डः

स यो वायुः प्राण एव सः योऽग्निर्वागेव सा यश्चन्द्रमा मन एव तद् य आदित्यस्स्वर एव सः तस्मादेतमादित्यमाहुस्स्वर एतीति १ स यो ह वा अमूर्देवता उपास्ते या अमूरधिदेवतं दूरूपा वा एता दुरनुसम्प्राप्या इव कस्तद्वेद यद्येता अनु वा सम्प्राप्नुयान्न वा २ अथ य एना अध्यात्ममुपास्ते स हान्तिदेवो भवति निर्जीर्यन्तीव वा इत एता तस्य वा एताश्शरीरस्य सह प्राणेन निर्जीर्यन्ति क उ एव तद्वेद यद्येता अनु वा सम्प्राप्नुयान्न वा ३ अथ य एना उभयीरेकधा भवन्तीर्वेद स एवानुष्ठ्या साम वेद स आत्मानं वेद स ब्रह्म वेद ४ तदाहुः प्रादेशमात्राद्वा इत एता एकम्भवन्ति अतो ह्ययम्प्राणस्स्वर्य उपर्युपरि वर्तत इति ५ अथ हैक आहुश्चतुरङ्गुलाद्वा इत एता एकम्भवन्तीति अतो ह्येवायम्प्राणस्स्वर्य उपर्युपरि वर्तत इति ६ स एष ब्रह्मण आवर्तः स य एवमेतम्ब्रह्मण आवर्तं वेदाभ्येनम्प्रजाः पशव आवर्तन्ते सर्वमायुरेति ७ स यो हैवं विद्वान्प्राणेन प्राणयापानेनापान्य मनसैता उभयीर्देवता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्तम्भवति सर्वं जितं न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ८ ३३

षष्ठेऽनुवाके पञ्चमः खण्डः

तदेतन्मिथुनं यद्वाक्च प्राणश्च मिथुनमृक्सामे आचतुरं वाव मिथुनम्प्रजननम् १ तद्यत्राद आह सोमः पवत इति वोपावर्तध्वमिति वा तत्सहैव वाचा मनसा प्राणेन स्वरेण हिङ्कुर्वन्ति तधिङ्कारेण मिथुनं क्रियते २ सहैव वाचा मनसा प्राणेन स्वरेण निधनमुपयन्ति तन्निधनेन मिथुनम्क्रियते ३ तत्सप्तविधं साम्नः

सप्तकृत्व उद्गातात्मानं च यजमानं च शरीरात्प्रजनयति ४ यादृशस्यो ह वै रेतो भवति तादृशं सम्भवति यदि वै पुरुषस्य पुरुष एव यदि गोर्गौरेव यद्यश्वस्याश्व एव यदि मृगस्य मृग एव यस्यैव रेतो भवति तदेव सम्भवति ५ तद्यथा ह वै सुवर्णं हिरणयमग्नौ प्रास्यमानं कल्याणतरं कल्याणतरम्भवत्येवमेव कल्याणतरेण कल्याणतरेणात्मना सम्भवति य एवं वेद ६ तदेतदृचाभ्यनूच्यते ७ ३४

षष्ठेऽनुवाके षष्ठः खणडः

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः समुद्रे अन्तः कवयो वि चक्षते मरीचीनाम्पदमिच्छन्ति वेधस इति १ पतङ्गमक्तमिति प्राणो वै पतङ्गः पतन्निव ह्येष्वङ्गेष्वति रथमुदीक्षते पतङ्ग इत्याचक्षते २ असुरस्य माययेति मनो वा असुरं तद्ध्यसुषु रमते तस्यैष माययाक्तः ३ हृदा पश्यन्ति मनसा विपश्चित इति हृदैव ह्येते पश्यन्ति यन्मनसा विपश्चितः ४ समुद्रे अन्तः कवयो वि चक्षत इति पुरुषो वै समुद्र एवंविद उ कवयः त इमाम्पुरुषेऽन्तर्वाचं विचक्षते ५ मरीचीनाम्पदमिच्छन्ति वेधस इति मरीच्य इव वा एता देवता यदग्निर्वायुरादित्यश्चन्द्रमाः ६ न ह वा एतासां देवतानाम्पदमस्ति पदेनो ह वै पुनर्मृत्युरन्वेति ७ तदेतदनन्वितं साम पुनर्मृत्युना अति पुनर्मृत्युं तरति य एवं वेद ८ ३५

षष्ठेऽनुवाके सप्तमः खणडः

पतङ्गो वाचम्मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः तां द्योतमानां स्वर्यम्मनीषामृतस्य पदे कवयो नि पान्तीति १ पतङ्गो वाचम्मनसा बिभर्तीति प्राणो वै पतङ्गः स इमां वाचम्मनसा बिभर्ति २ तां गन्धर्वोऽवदद्गर्भे अन्तरिति प्राणो वै गन्धर्वः पुरुष उ गर्भः स इमाम्पुरुषेऽन्तर्वाचं वदति ३ तां द्योतमानां स्वर्यम्मनीषामिति स्वर्या ह्येषा मनीषा यद्वाक् ४ ऋतस्य पदे कवयो नि पान्तीति मनो वा ऋतमेवंविद उ कवयः ओमित्येतदेवाक्षरमृतं तेन यदृ-चम्मीमांसन्ते यद्यजुर्तत्साम तदेनां निपान्ति ५ ३६

षष्ठेऽनुवाकेऽष्टमः खणडः

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तं स सध्रीचीस्स विषू-

चीर्वसान आ वरीवर्त्ति भुवनेष्वन्तरिति १ अपश्यं गोपामनिपद्यमानमिति प्राणो वै गोपाः स हीदं सर्वमनिपद्यमानो गोपायति २ आ च परा च पथिभिश्चरन्तमिति तद्ये च ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च परा च पथिभिश्चरति ३ स सध्रीचीस्स विषूचीर्वसान इति सध्रीचीश्च ह्येष एतद्विषूचीश्च प्रजा वस्ते ४ आ वरीवर्त्ति भुवनेष्वन्तरिति एष ह्येवैषु भुवनेष्वन्तरावरीवर्त्ति ५ स एष इन्द्र उद्गीथः स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄणां च विज्ञायते इत एवोर्ध्वस्स्वरुदेति स उपरि मूर्ध्नो लेलायति ६ स विद्यादागमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशेच्यत इति तस्मिन्ह न कश्चन पप्मा न्यङ्गः परिशिष्यते ७ तदेतदभ्रातृव्यं साम न ह वा इन्द्रः कं चन भ्रातृव्यम्पश्यते स यथेन्द्रो न कं चन भ्रातृव्यम्पश्यत एवमेव न कं चन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ८ ३७

षष्ठेऽनुवाके नवमः खण्डः

षष्ठोऽनुवाकस्समाप्तः

प्रजापतिम्ब्रह्मासृजत तमपश्यममुखमसृजत १ तमप्रपश्यममुखं शयानम्ब्रह्माविशत् पुरुष्यं तत् प्राणो वै ब्रह्म प्राणो वावैनं तदाविशत् २ स उदतिष्ठत्प्रजानां जनयिता तं रक्षांस्यन्वसचन्त ३ तमेतदेव साम गायन्नत्रायत यद्गायन्नत्रायत तद्गायत्रस्य गायत्रत्वम् ४ त्रायत एनं सर्वस्मात्पाप्मनो मुच्यते य एवं वेद ५ तमुपास्मै गायता नर इत्यृचाश्रवणीयेनोपागायन् ६ यदुपास्मै गायता नर इति तेन गायत्रमभवत्तस्मादेषैव प्रतिपत्कार्या ७ पवमानायेन्दावा अभि देवमिया हुं भा क्षाता इति षोडशाक्षराण्यभ्यगायन्त षोडशकलं वै ब्रह्म कलाश एवैनं तद्ब्रह्माविशत् ८ तदेतच्चतुर्विंशत्यक्षरं गायत्रमष्टाक्षरः प्रस्तावः षोडशाक्षरं गीतं तच्चतुर्विंशतिस्सम्पद्यन्ते चतुर्विंशत्यर्धमासस्संवत्सरः संवत्सरस्साम ९ ता ऋचश्शरीरेण मृत्युरन्वैतत्तद्यच्छरीरवत्तन्मृत्योराप्तमथ यदशरीरं तदमृतं तस्याशरीरेण साम्ना शरीराण्यधूनोत् १० ३८

सप्तमेऽनुवाके प्रथमः खण्डः

ओवा३चोवा३चोवा३छुम्भा ओवा इति षोडशाक्षराण्यभ्यगायत षोडशकलो वै पुरुषः कलाश एवास्य तच्छरीराण्यधूनोत् १ स एषोऽपहतपाप्मा धूतशरीरः तदेक्क्रियावृतियुदासंगायत्यो इत्युदास आ इति आवृद्यात् वागिति तद्ब्रह्म

तदिदन्तरिक्षं सोऽयं वायुः पवते हुमिति चन्द्रमाः भा इत्यादित्यः २ एतस्य ह वा इदमक्षरस्य क्रतोर्भातीत्याचक्षते ३ एतस्य ह वा इदमक्षरस्य क्रतोर-भ्रमित्याचक्षते ४ एतस्य ह वा इदमक्षरस्य क्रतोः कुभ्रमित्याचक्षते ५ एतस्य ह वा इदमक्षरस्य क्रतोश्शुभ्रमित्याचक्षते ६ एतस्य ह वा इदमक्षरस्य क्रतो-र्वृषभ इत्याचक्षते ७ एतस्य ह वा इदमक्षरस्य क्रतोर्दर्भ इत्याचक्षते ८ एतस्य ह वा इदमक्षरस्य क्रतोर्यो भातीत्याचक्षते ९ एतस्य ह वा इदमक्षरस्य क्रतो-स्सम्भवतीत्याचक्षते १० तद्यत्किं च भा३ इति च भा३ इति च तदेतन्मिथुनं गायत्रं प्र मिथुनेन जायते य एवं वेद ११ ३९

सप्तमेऽनुवाके द्वितीयः खराडः

तदेतदमृतं गायत्रम् एतेन वै प्रजापतिरमृतत्वमगच्छदेतेन देवा एतेनर्षयः १ तदेतद्ब्रह्म प्रजापतयेऽब्रवीत्प्रजापतिः परमेष्ठिने प्राजापत्याय परमेष्ठी प्राजापत्यो देवाय सवित्रे देवस्सवित्ताग्नयेऽग्निरिन्द्रायेन्द्रः काश्यपाय काश्यप ऋृश्यशृङ्गाय काश्यपायर्श्यशृङ्गः काश्यपो देवतरसे श्यावसायनाय काश्यपाय देवतराश्श्यावसायनः काश्यपश्श्रुषाय वाह्नेयाय काश्यपाय श्रुषो वाह्नेयः काश्यप इन्द्रोताय दैवापाय शौनकायेन्द्रोतो दैवापश्शौनको दृतय ऐन्द्रोतये शौनकाय दृतिरैन्द्रोतिश्शौनकः पुलुषाय प्राचिनायोग्याय पुलुषः प्राचीन-योग्यस्सत्ययज्ञाय पौलुषये प्राचीनयोग्याय सत्ययज्ञः पौलुषिः प्राचीनयो-ग्यस्सोमशुष्माय सात्ययज्ञये प्राचीनयोग्याय सोमशुष्मस्सात्ययज्ञिः प्राचीन-योग्यो हृस्त्वाशयायाल्लकेयाय माहावृषाय राज्ञे हृत्स्वाशय ग्राल्लकेयो माहावृषो राजा जनश्रुताय कारिड्वयाय जनश्रुतः कारिड्वयस्सायकाय जानश्रुतेयाय कारिड्वयाय सायको जानश्रुतेयः कारिड्वयो नगरिणे जान-श्रुतेयाय कारिड्वयाय नगरी जानश्रुतेयः कारिड्वयश्शङ्गाय शाटचक ग्रयनय ग्रात्रेयाय शङ्गश्शाट्यायनिरात्रेयो रामाय क्रातुजातेयाय वैयाघ्रपद्याय रामः क्रातुजातेयो वैयाघ्रपद्यः २ ४०

सप्तमेऽनुवाके तृतीयः खराडः

शङ्खाय बाभ्रव्याय शङ्खो बाभ्रव्यो दक्षाय कात्यायनय ग्रात्रेयाय दक्षः कात्यायनिरात्रेयः कंसाय वारकये कंसो वारिकिः प्रोष्ठपादाय वारक्याय प्रोष्ठपादो वारक्यः कंसाय वारक्याय कंसो वारक्यो जयन्ताय वारक्याय जयन्तो

वारक्यः कुबेराय वारक्याय कुबेरो वारक्यो जयन्ताय वारक्याय जयन्तो वारक्यो जनश्रुताय वारक्याय जनश्रुतो वारक्यस्सुदत्ताय पाराशर्याय सुदत्तः पाराशर्योऽषाढायोत्तराय पाराशर्यायाषाढ उत्तरः पाराशर्यो विपश्चिते शकुनिमित्राय पाराशर्याय विपश्चिच्छकुनिमित्रः पाराशर्यो जयन्ताय पाराशर्याय जयन्तः पाराशर्यः १ ४१

सप्तमेऽनुवाके चतुर्थः खराडः

श्यामजयन्ताय लौहित्याय श्यामजयन्तो लौहित्यः पल्लिगुप्ताय लौहित्याय पल्लिगुप्तो लौहित्यस्सत्यश्रवसे लौहित्याय सत्यश्रवा लौहित्यः कृष्णधृतये सात्यकये कृष्णधृतिस्सात्यकिश्श्यामसुजयन्ताय लौहित्याय श्यामसुजयन्तो लौहित्यः कृष्णदत्ताय लौहित्याय कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय मित्रभूतिर्लौहित्यश्श्यामजयन्ताय लौहित्याय श्यामजयन्तो लौहित्यस्त्रिवेदाय कृष्णराताय लौहित्याय त्रिवेदः कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय यशस्वी जयन्तो लौहित्यो जयकाय लौहित्याय जयको लौहित्यः कृष्णराताय लौहित्याय कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय विपश्चिद्दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये दृढजयन्ताय लौहित्याय वैपश्चितो दार्ढजयन्तिर्दृधजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये गुप्ताय लौहित्याय १ तदेतदमृतं गायत्रमथ यान्यन्यानि गीतानि काम्यान्येव तानि काम्यान्येव तानि २ ४२

सप्तमेऽनुवाके पञ्चमः खराडः

सप्तमोऽनुवाकस्समाप्तः

इति तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः

श्वेताश्वो दर्शतो हरिनीलोऽसि हरितस्पृशस्समानबुद्धो मा हिंसीः न मां त्वं वेत्थ प्रद्रव १ यदभ्यवचरणोऽभ्यवैषि स्वपन्तम्पुरुषमकोविदमश्ममयेन वर्मणा वरुणोऽन्तर्दधातु मा २ यदभ्यवचरणोऽभ्यवैषि स्वपन्तम्पुरुषमकोविदमयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ३ यदभ्यवचरणोऽभ्यवैषि स्वपन्तम्पुरुषमकोविदं लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ४ यदभ्यवचरणोऽभ्यवैषि

स्वपन्तम्पुरुषमकोविदं रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ५ यदभ्यव-चरणोऽभ्यवैषि स्वपन्तम्पुरुषं सुवर्णमयेन वर्मणा वरुणोऽन्तर्दधातु मा ६ आयुर्माता मतिः पिता नमस्त आविशोषण ग्रहो नामासि विश्वायुस्तस्मै ते विश्वाहा नमो नमस्ताम्राय नमो वरुणाय नमो जिघांसते ७ यद्दम राजन्मा मां हिंसीः राजन्यद्दम मा हिंसीः तयोस्संविदानयोस्सर्वमायुरयान्यहम् ८ १

प्रथमोऽनुवाकस्समाप्तः

पुरुषो वै यज्ञः १ तस्य यानि चतुर्विंशतिर्वर्षाणि तत्प्रातस्सवनं चतुर्विंशत्यक्षरा गायत्री गायत्रम्प्रातस्सवनम् २ तद्वसूनां प्राणा वै वसवः प्राणा हीदं सर्वं वस्वाददते ३ स यद्येनमेतस्मिन्काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा वसव इदम्मे प्रातस्सवनम्माध्यन्दिनेन सवनेनानुसंतनुतेति अगदो हैव भवति ४ अथ यानि चतुश्चत्वारिंशतं वर्षाणि तन्माध्यन्दिनं सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभम्माध्यन्दिनं सवनम् ५ तद्रुद्राणां प्राणा वै रुद्राः प्राणा हीदं सर्वं रोदयन्ति ६ स यद्येनमेतस्मिन्काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा रुद्रा इदम्मे माध्यन्दिनं सवनं तृतीयसवनेनानुसंतनुतेति अगदो हैव भवति ७ अथ यान्यष्टाचत्वा-रिंशतं वर्षाणि तत्तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयसवनम् ८ तदादित्यानां प्राणा वा आदित्याः प्राणा हीदं सर्वमाददते ९ स यद्ये-नमेतस्मिन्काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा आदित्या इदम्मे तृतीयसवनमा-युषानुसंतनुतेति अगदो हैव भवति १० एतद्ध तद्विद्वान्ब्राह्मण उवाच महिदास ऐतरेय उपतपति किमिदमुपतपसि योऽहमनेनोपतपता न प्रेष्यामीति स ह षोडशशतं वर्षाणि जिजीव प्र ह षोडशशतं वर्षाणि जीवति नैनम्प्राणस्सा-म्यायुषो जहाति य एवं वेद ११

द्वितीयोऽनुवाकस्समाप्तः २

त्र्यायुषं कश्यपस्य जमदग्नेस्त्र्यायुषं त्रीरायमृतस्य पुष्पाणि त्रीरायायूंषि मेऽकृणोः १ स नो मयोभूः पितवाविशस्व शान्तिको यस्तनुवे स्योनः २ येऽग्नयः पुरीष्याः प्रविष्टाः पृठिवीमनु तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ३ ३

तृतीयोऽनुवाकस्समाप्तः

अररायस्य वत्सोऽसि विश्वनामा विश्वाभिरक्षणोऽपाम्पक्वोऽसि वरुणस्य

दूतोऽन्तर्धिनाम १ यथा त्वममृतो मर्त्येभ्योऽन्तर्हितोऽस्येवं त्वमस्मानघा-युभ्योऽन्तर्धेहि अन्तर्धिरसि स्तेनेभ्यः २ ४

चतुर्थोऽनुवाकस्समाप्तः

व्युषि सविता भवस्युदेष्यन्विष्णुरुद्यन्पुरुष उदितो बृहस्पतिरभिप्रयन्मघवेन्द्रो वैकुण्ठो माध्यन्दिने भगोऽपराह्ण उग्रो देवो लोहितायन्नस्तमिते यमो भवसि १ अश्नसु सोमो राजा निशायाम्पितृराजस्स्वप्ने मनुष्यान्प्रविशसि पयसा पशून् २ विरात्रे भवो भवस्यपररात्रेऽङ्गिरा अग्निहोत्रवेलायाम्भृगुः ३ तस्य तदेत-देव मण्डलमूधः तस्यैतौ स्तनौ यद्वाक्च प्राणश्च ताभ्याम्मे धुक्ष्वाध्या-यम्ब्रह्मचर्यम्प्रजाम्पशूनस्वर्गं लोकं सजातवनस्याम् ४ एता आशिष आशासे भूर्भुवस्स्वः उदिते शुक्रमादिश तदत्मन्दधे ५ ५

पञ्चमोऽनुवाकस्समाप्तः

भगेरथो हैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण आस १ तदु ह कुरुपञ्चा-लानाम्ब्राह्मणा ऊचुर्भगेरथो ह वा अयमैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाणः एतेन कथां वदिष्याम इति २ तं हाभ्येयुः तेभ्यो हाभ्यागते-भ्योऽपचितीश्चकार ३ अथ हैषां स भाग आवव्राजोप्त्वा केशश्मश्रूणि नखा-न्निकृत्याज्येनाभ्यज्य दण्डोपानहम्बिभ्रत् ४ तान्होवाच ब्राह्मणा भगवन्तः कतमो वस्तद्वेद यथाश्रावितप्रत्याश्राविते देवान्गच्छत इति ५ अथ होवाच कतमो वस्तद्वेद यद्विदुषस्सूद्गाता सुहोता स्वध्वर्युस्सुमानुषविदाजायत इति ६ अथ होवाच कतमो वस्तद्वेद यच्छन्दांसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुतान्यभिसम्पद्यन्त इति ७ अथ होवाच कतमो वस्तद्वेद यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ८ अथ होवाच कतमो वस्तद्वेद यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ९ ६

षष्ठेऽनुवाके प्रथमः खण्डः

एतान्हैनान्पञ्च प्रश्नान्पप्रच्छ १ तेषां ह कुरुपञ्चालानाम्बको दाल्भ्योऽनूचान आस २ स होवाच यथाश्रावितप्रत्याश्राविते देवान्गच्छत इति प्राच्यां वै राजन्दिश्याश्रावितप्रत्याश्राविते देवान्गच्छतः तस्मात्प्राङ्तिष्ठन्नाश्रावयति प्राङ्तिष्ठन्प्रत्याश्रावयतीति ३ अथ होवाच यद्विदुषस्सूद्गाता सुहोता स्वध्व-

र्युस्सुमानुषविदाजायत इति यो वै मनुष्यस्य सम्भूतिं वेदेति होवाच तस्य सूद्गाता सुहोता स्वध्वर्युस्सुमानुषविदाजायत इति प्राणा उ ह वाव राजन्मनुष्यस्य सम्भूतिरेवेति ४ अथ होवाच यच्छन्दांसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुतान्यभिसम्पद्यन्त इति गायत्रीमु ह वाव राजन्सर्वाणि छन्दांसि संस्तुतान्यभिसम्पद्यन्त इति ५ अथ होवाच यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो ह वाव राजन्गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ६ अथ होवाच यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ७ ७

षष्ठेऽनुवाके द्वितीयः खगडः

यो वै गायत्र्यै मुखं वेदेति होवाच तं दक्षिणा प्रतिगृहीता न हिंसन्तीति १ अग्निर्ह वाव राजन्गायत्रीमुखं तस्माद्यदग्नावभ्यादधाति भूयानेव स तेन भवति वर्धते एवमेवैवं विद्वान्ब्राह्मणः प्रतिगृह्णन्भूयानेव भवति वर्धत उ एवेति २ स होवाचानूचानो वै किलायम्ब्राह्मण आस त्वामहमनेन यज्ञेनैमीति ३ तस्य वै ते तथोद्गास्यामीति होवाच यथैकराडेव भूत्वा स्वर्गं लोकमेष्यसीति ४ तस्मा एतेन गायत्रेणोद्गीथेनोज्जगौ स हैकराडेव भूत्वा स्वर्गं लोकमियाय तेन हैतेनैकराडेव भूत्वा स्वर्गं लोकमेति य एवं वेद ५ ओं वा इति द्वे अक्षरे ओं वा इति चतुर्थे ओं वा इति षष्ठे हुम्भा ओं वागित्यष्टमे ६ तेन हैतेन प्रतीदर्शोऽस्य भयदस्यासमात्यस्योज्जगौ ७ तं होवाच किं त आगास्यामीति स होवाच हरी मे देवाश्वावागायेति तथेति तौ हास्मा आजगौ तौ हैनमाजग्मतुः ८ स वा एष उद्गीथः कामानां सम्पदों वा३चों वा३चों वा३छुम्भा ओं वागिति साङ्गो हैव सतनुरमृतस्सम्भवति य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ९ ८

षष्ठेऽनुवाके तृतीयः खगडः

षष्ठोऽनुवाकस्समाप्तः

पुरुषो वै यज्ञः पुरुषो होद्गीथः अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमाः १ ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधति तस्य वाचमेवाग्निरभिदधाति प्राणं वायुश्चक्षुरादित्यश्श्रोत्रं चन्द्रमाः २ तदाहुस्स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुञ्चतीति ३ तद्यस्यैवं विद्वान्प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवास्योन्मुञ्चति ४ अथ यस्यैवं विद्वानुद्गायति य एवास्य प्राणे

मृत्युपाशस्तमेवास्योन्मुञ्चति ५ अथ यस्यैवं विद्वान्प्रतिहरति य एवास्य चक्षुषि मृत्युपाशस्तमेवास्योन्मुञ्चति ६ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्य श्रोत्रे मृत्युपाशस्तमेवास्योन्मुञ्चति ७ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुञ्चति ८ तदाहुस्स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृणातीति ९ ९

सप्तमेऽनुवाके प्रथमः खण्डः

तद्यस्यैवं विद्वान्हिङ्करोति य एवास्य लोमसु मृत्युपाशस्तस्मादेवैनं स्पृणाति १ अथ यस्यैवं विद्वान्प्रस्तौति य एवास्य त्वचि मृत्युपाशस्तस्मादेवैनं स्पृणाति २ अथ यस्यैवं विद्वानादिमादत्ते य एवास्य मांसेषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ३ अथ यस्यैवं विद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्तस्मा-देवैनं स्पृणाति ४ अथ यस्यैवं विद्वान्प्रतिहरति य एवास्याङ्गेषु मृत्युपा-शस्तस्मादेवैनं स्पृणाति ५ अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्थिषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ६ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्य मज्जसु मृत्युपाशस्स तस्मादेवैनं स्पृणाति ७ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृणाति ८ तदा-हुस्स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृत्वा स्वर्गे लोके सप्तधा दधातीति ९ स वा एष इन्द्रो वैमृध उद्यन्भवति सवितोदितो मित्रस्संगवकाल इन्द्रो वैकुण्ठो मध्यन्दिने समावर्तमानश्शर्व उग्रो देवो लोहितायन्प्रजापतिरेव संवेशेऽस्तमितः १० तद्यस्यैवं विद्वान्हिङ्करोति य एवास्योद्यतस्स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ११ अथ यस्यैवं विद्वान्प्रस्तौति य एवास्योदिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति १२ अथ यस्यैवं विद्वानादिमादत्ते य एवास्य संगवकाले स्वर्गो लोक-स्तस्मिन्नेवैनं दधाति १३ अथ यस्यैवं विद्वानुद्गायति य एवास्य मध्यन्दिने स्वर्गो लोकस्तस्मिन्नेवैनं दधाति १४ अथ यस्यैवं विद्वान्प्रतिहरति य एवा-स्यापराह्णे स्वर्गो लोकस्तस्मिन्नेवैनं दधाति १५ अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्तंयतस्स्वर्गो लोकस्तस्मिन्नेवैनं दधाति १६ अथ यस्यैवं विद्वान्नि-धनमुपैति य एवास्यास्तमिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति १७ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृत्वा स्वर्गे लोके सप्तधा दधाति १८ १०

सप्तमेऽनुवाके द्वितीयः खगडः
सप्तमोऽनुवाकस्समाप्तः

षड्ढ वै देवतास्स्वयम्भुवोऽग्निर्वायुरसावादित्यः प्राणोऽन्नं वाक् १ ताश्श्रैष्ठ्ये व्यवदन्ताहं श्रेष्ठास्म्यहं श्रेष्ठास्म्यमां श्रियमुपाध्वमिति २ ता अन्योन्यस्यै श्रेष्ठतायै नातिष्ठन्त ता अब्रुवन्न वा अन्योन्यस्यै श्रेष्ठतायै तिष्ठामह एता सम्प्रब्रवामहै यथा श्रेष्ठास्स्म इति ३ ता अग्निमब्रुवन्कथं त्वं श्रेष्ठोऽसीति ४ सोऽब्रवीदहं देवानाम्मुखमस्म्यहमन्यासाम्प्रजानाम्मयाहुतयो हूयन्ते अहं देवानामन्नं विकरोम्यहम्मनुष्याणाम् ५ स यन्न स्याममुखा एव देवास्स्युरमुखा अन्याः प्रजाः नाहुतयो हूयेरन्न देवानामन्नं विक्रियेत न मनुष्याणाम् ६ तत इदं सर्वम्पराभवेत्ततो न किं चन परिशिष्येतेति ७ एवमेवेति होचुर्नैवेह किं चन परिशिष्येत यत्त्वं न स्या इति ८ अथ वायुमब्रुवन्कथमु त्वं श्रेष्ठोऽसीति ९ सोऽब्रवीदहं देवानाम्प्राणोऽस्म्यहमन्यासाम्प्रजानां यस्मादहमुत्क्रामामि ततस्स प्रप्लवते १० स यदहं न स्यां तत इदं सर्वम्पराभवेत्ततो न किं चन परिशिष्येतेति ११ एवमेवेति होचुर्नैवेह किं चन परिशिष्येत यत्त्वं न स्या इति १२ ११
अष्टमेऽनुवाके प्रथमः खगडः

अथादित्यमब्रुवन्कथमु त्वं श्रेष्ठोऽसीति १ सोऽब्रवीदहमेवोद्यन्नहर्भवाम्यहमस्तंयन्रात्रिः मया चक्षुषा कर्माणि क्रियन्ते स यदहं न स्यां नैवाहस्स्यान्न रात्रिः न कर्माणि क्रियेरन् २ तत इदं सर्वम्पराभवेत्ततो न किं चन परिशिष्येतेति ३ एवमेवेति होचुर्नैवेह किं चन परिशिष्येत यत्त्वं न स्या इति ४ अथ प्राणमब्रुवन्कथमु त्वं श्रेष्ठोऽसीति ५ सोऽब्रवीत्प्राणो भूत्वाग्निर्दीप्यते प्राणो भूत्वा वायुराकाशमनुभवति प्राणो भूत्वादित्य उदेति प्राणादन्नम्प्राणाद्वाक् ६ स यदहं न स्यां तत इदं सर्वम्पराभवेत्ततो न किं चन परिशिष्येतेति ७ एवमेवेति होचुर्नैवेह किं चन परिशिष्येत यत्त्वं न स्या इति ८ अथान्नमब्रुवन्कथमु त्वं श्रेष्ठमसीति ९ तदब्रवीन्मयि प्रतिष्ठायाग्निर्दीप्यते मयि प्रतिष्ठाय वायुराकाशमनुविभवति मयि प्रतिष्ठायादित्य उदेति मदेव प्राणो मद्वाक् १० स यदहं न स्यां तत इदं सर्वम्पराभवेत्ततो न किं चन परिशिष्येतेति ११ एवमेवेति होचुर्नैवेव किं चन परिशिष्येत यत्त्वं न स्या इति १२ अथ वाचमब्रुवन्कथमु त्वं श्रेष्ठासीति १३ साब्रवीन्मयैवेदं विज्ञायते मयादः स यदहं

न स्यां नैवेदं विज्ञायेत नादः १४ तत इदं सर्वम्पराभवेन्नैवेह किं चन परिशिष्येतेति १५ एवमेवेति होचुर्नैवेह किं चन परिशिष्येत यत्त्वं न स्या इति १६ १२

अष्टमेऽनुवाके द्वितीयः खण्डः

ता अब्रुवन्नेता वै किल सर्वा देवताः एकैकामेवानु स्मः स यन्नु नस्सर्वासां देवतानामेका चन न स्यात्तत इदं सर्वम्पराभवेत्ततो न किं चन परिशिष्येत हन्त सार्धं समेत्य यच्छ्रेष्ठं तदसामेति १ ता एतस्मिन्प्राण ओकारे वाच्यकारे समायन्तद्यत्समायन्तत्साम्नस्सामत्वम् २ ता अब्रुवन्यानि नो मर्त्यान्यनपहतपाप्मान्यक्षराणि तान्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रं गायामाग्नौ वायावादित्ये प्राणेऽन्ने वाचि तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ३ एत्यग्नेरमृतमपहतपाप्म शुद्धमक्षरं ग्निरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ४ वेति वायोरमृतमपहतपाप्म शुद्धमक्षरं युरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ५ एत्यादित्यस्यामृतमपहतपाप्म शुद्धमक्षरं त्येत्यस्य मर्त्यमनपहतपाप्माक्षरम् ६ प्रेति प्राणस्यामृतमपहतपाप्म शुद्धमक्षरं णेत्यस्य मर्त्यमनपहतपाप्माक्षरम् ७ एत्यन्नस्यामृतमपहतपाप्म शुद्धमक्षरं नमित्यस्य मर्त्यमनपहतपाप्माक्षरम् ८ वेति वाचोऽमृतमपहतपाप्म शुद्धमक्षरं गित्यस्यै मर्त्यमनपहतपाप्माक्षरम् ९ ता एतानि मर्त्यान्यनपहतपाप्मान्यक्षराण्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रमागायन्नग्नौ वायावादित्ये प्राणेऽन्ने वाचि तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् १० अपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ११ १३

अष्टमेऽनुवाके तृतीयः खण्डः

ता ब्रह्माब्रुवन्त्वयि प्रतिष्ठायैतमुद्यच्छामेति ता ब्रह्माब्रवीदास्येन प्राणेन युष्मानास्येन प्राणेन मामुपाप्नवाथेति १ ता एतेन प्राणेनौकारेण वाच्यकारमभिनिमेष्यन्त्यो हिङ्काराद्धकारमोकारेण वाचमनुस्वरन्त्य उभाभ्याम्प्राणाभ्यां गायत्रमगायन्नोवा३चोवा३चोवा३छुम्भा वो वा इति २ स यथोभयापदी प्रतितिष्ठत्येवमेव स्वर्गे लोके प्रत्यतिष्ठन्प्रति स्वर्गे लोके तिष्ठति य एवं वेद ३ य उ ह वा एवंविदस्माल्लोकात्प्रैति स प्राण एव भूत्वा वायुमप्येति वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं वृष्ट्यैवेमं लोकमनुविभवति ४ ऋषयो ह

सत्रमासां चक्रिरे ते पुनःपुनर्बह्वीभिर्बह्वीभिः प्रतिपद्भिस्स्वर्गस्य लोकस्य द्वारं नानु चन बुबुधिरे ५ त उ श्रमेण तपसा व्रतचर्येणेन्द्रमवरुरुधिरे ६ तं होचुस्स्वर्गं वै लोकमैप्सिष्म ते पुनःपुनर्बह्वीभिर्बह्वीभिः प्रतिपद्भिस्स्वर्गस्य लोकस्य द्वारं नानु चनाभुत्स्महि तथा नोऽनुशाधि यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमियामेति ७ तान्होवाच को वस्स्थविरतम इति ८ १४

अष्टमेऽनुवाके चतुर्थः खगडः

अहमित्यगस्त्यः १ स वा एहीति होवाच तस्मै वै तेऽहं तद्वक्ष्यामि यद्विद्वांसस्स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेष्यथेति २ तस्मा एतं गायत्रस्योद्गीथमुपनिषदममृतमुवाचाग्नौ वायावादित्ये प्राणेऽन्ने वाचि ३ ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ४ एवमेवैवं विद्वान्स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्तस्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेति ५ १५

अष्टमेऽनुवाके पञ्चमः खगडः

अष्टमोऽनुवाकस्समाप्तः

एवं वा एतं गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायोवाचागस्त्य इषाय श्यावाश्वय इषश्श्यावाश्विर्गौषूक्तये गौषूक्तिर्ज्वालायनाय ज्वालायनश्शाटचायनये शाटचायनी रामाय क्रातुजातेयाय वैयाघ्रपद्याय रामः क्रातुजातेयो वैयाघ्रपद्यः १ १६

नवमेऽनुवाके प्रथमः खगडः

शङ्खाय बाभ्रव्याय शङ्खो बाभ्रव्यो दक्षाय कात्यायनय आत्रेयाय दक्षः कात्यायनिरात्रेयः कंसाय वारक्याय कंसो वारक्यस्सुयज्ञाय शागिडल्याय सुयज्ञश्शागिडल्योऽग्निदत्ताय शागिडल्यायाग्निदत्तश्शागिडल्यस्सुयज्ञाय शागिडल्याय सुयज्ञश्शागिडल्यो जयन्ताय वारक्याय जयन्तो वारक्यो जनश्रुताय वारक्याय जनश्रुतो वारक्यस्सुदत्ताय पाराशर्याय १ सैषा शाटचायनी गायत्रस्योपनिषदेवमुपासितव्या २ १७

नवमेऽनुवाके द्वितीयः खण्डः
नवमोऽनुवाकस्समाप्तः

केनेषितम्पतति प्रेषितम्मनः केन प्राणः प्रथमः प्रैति युक्तः केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति १ श्रोत्रस्य श्रोत्रम्मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति २ न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः न विद्म न विजानीमो यथैतदनुशिष्यात् ३ अन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ४ यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ५ यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ६ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ७ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ८ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ९ १८

दशमेऽनुवाके प्रथमः खण्डः

यदि मन्यसे सु वेदेति दह्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु अथ नु मीमांस्यमेव ते मन्येऽविदितम् १ नाहम्मन्ये सु वेदेति नो न वेदेति वेद च यो नस्तद्वेद तद्वेद नो न वेदेति वेद च २ यस्यामतं तस्य मतम्मतं यस्य न वेद सः अविज्ञातं विजानतां अविजानताम् ३ प्रति-बोधविदितम्मतममृतत्वं हि विन्दते आत्मना विन्दते वीर्यं विद्यया विन्दते-ऽमृतम् ४ इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः भूतेषु-भूतेषु विविच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ५ १९

दशमेऽनुवाके द्वितीयः खण्डः

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयः अस्माकमेवायम्महिमेति १ तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति २ तेऽग्निमब्रुवञ्जातवेद एतद्वि-जानीहि किमेतद्यक्षमिति तथेति ३ तदभ्यद्रवत्तमभ्यवदत्कोऽसीति अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ४ तस्मिंस्त्वयि किं वीर्यमिति

अपीदं सर्वं दहेयम्यदिदम्पृथिव्यामिति ५ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैनदशकं विज्ञातुं यदेतद्यक्षमिति ६ अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ७ तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ८ तस्मिंस्त्वयि किं वीर्यमिति अपीदं सर्वमाददीय यदिदम्पृ-थिव्यामिति ९ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैनदशकं विज्ञातुं यदेतद्यक्षमिति १० अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मा-त्तिरोऽदधे ११ स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहु शोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति १२ २०

दशमेऽनुवाके तृतीयः खगडः

ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्व इति ततो हैव विदां चकार ब्रह्मेति १ तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रः ते ह्येनन्ने-दिष्ठम्पस्पृशुस्स ह्येनत्प्रथमो विदां चकार ब्रह्मेति २ तस्माद्वा इन्द्रोऽतितरामि-वान्यान्देवान्स ह्येनन्नेदिष्ठम्पस्पर्श स ह्येनत्प्रथमो विदां चकार ब्रह्मेति ३ तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इति न्यमिषदा३ इत्यधिदेवतम् ४ अथाध्यात्मं यदेनद्गच्छतीव च मनोऽनेन चैनदुपस्मरत्यभीक्ष्णं संकल्पः ५ तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ६ उपनिषदम्भो ब्रूहीति उक्ता त उपनिषत् ब्राह्मीं वाव त उपनिषदमब्रूमेति ७ तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदास्सर्वाङ्गाणि सत्य-मायतनम् ८ यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोकेऽज्येये प्रतितिष्ठति ९ २१

दशमेऽनुवाके चतुर्थः खगडः
दशमोऽनुवाकस्समाप्तः

आशा वा इदमग्र आसीद्भविष्यदेव तदभवत्ता आपोऽभवन् १ तास्तपोऽतप्यन्त तास्तपस्तेपाना हुस्सित्येव प्राचीः प्राश्वसन्स वाव प्राणोऽभवत् २ ताः प्राणयापानन्स वा अपानोऽभवत् ३ ता अपान्य व्यानन्स वाव व्यानोऽभवत् ४ ता व्यान्य समानन्स वाव समानोऽभवत् ५ तास्समान्योदानन्स वा

उदानोऽभवत् ६ तदिदमेकमेव सधमाद्यमासीदविविक्तम् ७ स नाम-
रूपमकुरुत तेनैनद्व्यविनक् वि ह पाप्मनो विच्यते य एवं वेद ८ तदसौ वा
आदित्यः प्राणोऽग्निरपान आपो व्यानो दिशस्समानशन्द्रमा उदानः ९ तद्वा
एतदेकमभवत्प्राण एव स य एवमेतदेकम्भवद्वेदैवं हैतदेकधा भवतीत्येकधैव
श्रेष्ठस्स्वानाम्भवति १० तदग्निर्वै प्राणो वागिति पृथिवी वायुर्वै प्राणो वागि-
त्यन्तरिक्षमादित्यो वै प्राणो वागिति द्यौर्दिशो वै प्राणो वागिति श्रोत्रं चन्द्रमा
वै प्राणो वागिति मनः पुमान्वै प्राणो वागिति स्त्री ११ तस्येदं सृष्टं शिथिल-
म्भुवनमासीदपर्याप्तम् १२ स मनोरूपमकुरुत तेन तत्पर्याप्नोत् दृढं ह वा
अस्येदं सृष्टमशिथिलम्भुवनम्पर्याप्तम्भवति य एवं वेद १३ २२

एकादशेऽनुवाके प्रथमः खगडः

सैषा चतुर्धा विहिता श्रीरुद्गीथस्सामार्क्यं ज्येष्ठब्राह्मणम् १ प्राणो वावोद्वाग्गी
स उद्गीथः २ प्राणो वावामो वाक्सा तत्साम ३ प्राणो वाव को वागृक्तदर्क्यम्
४ प्राणो वाव ज्येष्ठो वाग्ब्राह्मणं तज्ज्येष्ठब्राह्मणम् ५ उपनिषदम्भो ब्रूहीति
उक्ता त उपनिषद्यस्य ते धातव उक्ताः त्रिधातु विषु वाव त उपनिषदमब्रूमेति
६ एतच्छुक्लं कृष्णं ताम्रं सामवर्ण इति ह स्माह यदैव शुक्लकृष्णे ताम्रो
वर्णोऽभ्यवैति स वै ते वृङ्ते दशम मानुषमिति त्रिधातु स ऐक्षत क्व नु म
उत्तानाय शयानायेमा देवता बलिं हरेयुरिति ७ २३

एकादशेऽनुवाके द्वितीयः खगडः

स पुरुषमेव प्रपदनायावृणीत १ तम्पुरस्तात्प्रत्यञ्चम्प्राविशत्तस्मा उरुरभव-
त्तदुरस उरस्त्वम् २ तस्मा अत्रसद एता देवता बलिं हरन्ति ३ वाचमनु-
हरन्तीमग्निरस्मै बलिं हरति ४ मनोऽनुहरञ्चन्द्रमा अस्मै बलिं हरति ५
चक्षुरनुहरदादित्योऽस्मै बलिं हरति ६ श्रोत्रमनुहरद्दिशोऽस्मै बलिं हरन्ति ७
प्राणमनुहरन्तं वायुरस्मै बलिं हरति ८ तस्यैते निष्वाताः पन्था बलिवाहना
इमे प्राणाः एवं हैतं निष्वाताः पन्था बलिवाहनास्सर्वतोऽपियन्ति प्राणा य एवं
वेद ९ सा हैषा ब्रह्मासन्दीमारूढा आ हास्मै ब्रह्मासन्दीं हरन्त्यधि ह ब्रह्मासन्दीं
रोहति य एवं वेद १० तदेतद्ब्रह्मयशश्श्रिया परिवृढं ब्रह्म ह तु सन्यशसा
श्रिया परिवृढो भवति य एवं वेद ११ तस्यैष आदेशो योऽयं दक्षिणेऽक्षन्नन्तः
तस्य यच्छुक्लं तदृचां रूपं यत्कृष्णं तत्साम्नां यदेव ताम्रमिव बभ्रुरिव तद्यजुषाम्

१२ य एवायं चक्षुषि पुरुष एष इन्द्र एष प्रजापतिस्समः पृथिव्या सम आकाशेन समो दिवा समस्सर्वेण भूतेन एष परो दिवो दीप्यते एष एवेदं सर्वमित्युपासितव्यम् १३ २४

एकादशेऽनुवाके तृतीयः खराडः

सच्चासच्चासच्च सच्च वाक्च मनश्च मनश्च वाक्च चक्षुश्च श्रोत्रं च श्रोत्रं च चक्षुश्च श्रद्धा च तपश्च तपश्च श्रद्धा च तानि षोडश १ षोडशकलम्ब्रह्म स य एवमेतत्षोडशकलम्ब्रह्म वेद तमेवैतत्षोडशकलम्ब्रह्माप्येति २ वेदो ब्रह्म तस्य सत्यमायतनं शमः प्रतिष्ठा दमश्च ३ तद्यथा श्वः प्रैष्यन्पापात्कर्मणो जुगुप्सेतैवमेवाहरहः पापात्कर्मणो जुगुप्सेताकालात् ४ अथैसां दशपदी विराट् ५ दश पुरुषे स्वर्गनरकाणि तान्येनं स्वर्गं गतानि स्वर्गं गमयन्ति नरकं गतानि नरकं गमयन्ति ६ २५

एकादशेऽनुवाके चतुर्थः खराडः

मनो नरको वाङ्नरकः प्राणो नरकश्चक्षुर्नरकश्श्रोत्रं नरकस्त्वङ्नरको हस्तौ नरको गुदं नरकश्शिश्नं नरकः पादौ नरकः १ मनसा परीक्ष्याणि वेदेति वेद २ वाचा रसान्वेदेति वेद ३ प्राणेन गन्धान्वेदेति वेद ४ चक्षुषा रूपाणि वेदेति वेद ५ श्रोत्रेण शब्दान्वेदेति वेद ६ त्वचा संस्पर्शान्वेदेति वेद ७ हस्ताभ्यां कर्माणि वेदेति वेद ८ उदरेणाशनयां वेदेति वेद ९ शिश्नेन रामान्वेदेति वेद १० पादाभ्यामध्वनो वेदेति वेद ११ प्लक्षस्य प्रास्त्रवणस्य प्रादेशमात्रादुदक्तत्पृथिव्यै मध्यमथ यत्रैते सप्तर्षयस्तद्दिवो मध्यम् १२ अथ यत्रैत ऊषास्तत्पृथिव्यै हृदयमथ यदेतत्कृष्णं चन्द्रमसि तद्दिवो हृदयम् १३ स य एवमेते द्यावापृथिव्योर्मध्ये च हृदये च वेद नाकामोऽस्माल्लोकात्प्रैति १४ नमोऽतिसामायैतुरेताय धृतराष्ट्राय पार्थुश्रवसाय ये च प्राणं रक्षन्ति ते मा रक्षन्तु स्वस्ति कर्मेति गार्हपत्यश्शम इत्याहवनीयो दम इत्यन्वाहार्यपचनः १५ २७

एकादशेऽनुवाके पञ्चमः खःडः

एकादशोऽनुवाकस्समाप्तः

का सावित्री अग्निरेव सविता पृथिवी सावित्री १ स यत्राग्निस्तत्पृथिवी यत्र वा पृथिवी तदग्निः ते द्वे योनी तदेकम्मिथुनम् २ कस्सविता का सावित्री

वरुण एव सविता आपस्सावित्री ३ स यत्र वरुणस्तदापो यत्र वापस्तद्वरुणः ते द्वे योनी तदेकम्मिथुनम् ४ कस्सविता का सावित्री वायुरेव सविता आकाशस्सावित्री ५ स यत्र वायुस्तदाकाशो यत्र वाकाशस्तद्वायुः ते द्वे योनी तदेकम्मिथुनम् ६ कस्सविता का सावित्री यज्ञ एव सविता छन्दांसि सावित्री ७ स यत्र यज्ञस्तच्छन्दांसि यत्र वा छन्दांसि तद्यज्ञः ते द्वे योनी तदेकम्मिथुनम् ८ कस्सविता का सावित्री स्तनयित्नुरेव सविता विद्युत्सावित्री ९ स यत्र स्तनयित्नुस्तद्विद्युद्यत्र वा विद्युत्तत्स्तनयित्नुः ते द्वे योनी तदेकम्मिथुनम् १० कस्सविता का सावित्री आदित्य एव सविता द्यौस्सावित्री ११ स यत्रादित्य-स्तद्द्यौर्यत्र वा द्यौस्तदादित्यः ते द्वे योनी तदेकम्मिथुनम् १२ कस्सविता का सावित्री चन्द्र एव सविता नक्षत्राणि सावित्री १३ स यत्र चन्द्रस्तन्नक्षत्राणि यत्र वा नक्षत्राणि तच्चन्द्रः ते द्वे योनी तदेकम्मिथुनम् १४ कस्सविता का सा-वित्री मन एव सविता वाक्सावित्री १५ स यत्र मनस्तद्वाग्यत्र वा वाक्तन्मनः ते द्वे योनी तदेकम्मिथुनम् १६ कस्सविता का सावित्री पुरुष एव सविता स्त्री सावित्री स यत्र पुरुषस्तत्स्त्री यत्र वा स्त्री तत्पुरुषः ते द्वे योनी तदेकम्मिथुनम् १७ २७

द्वादशेऽनुवाके प्रथमः खराडः

तस्या एष प्रथमः पादो भूस्तत्सवितुर्वरेरायमिति अग्निर्वै वरेरायमापो वै वरेरायं चन्द्रमा वै वरेरायम् १ तस्या एष द्वितीयः पादो भर्गमयो भुवो भर्गो देवस्य धीमहीति अग्निर्वै भर्गः आदित्यो वै भर्गः चन्द्रमा वै भर्गः २ तस्या एष तृतीयः पादस्स्वर्धियो यो नः प्रचोदयादिति यज्ञो वै प्रचोदयति स्त्री च वै पुरुषश्च प्रजनयतः ३ भूर्भुवस्तत्सवितुर्वरेरायम्भर्गो देवस्य धीमहीति अग्निर्वै भर्गः आदित्यो वै भर्गः चन्द्रमा वै भर्गः ४ स्वर्धियो यो नः प्रचोदयादिति यज्ञो वै प्रचोदयति स्त्री च वै पुरुषश्च प्रजनयतः ५ भूर्भुवस्स्वस्तत्सवितुर्वरेरायम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति यो वा एतां सावित्रीमेवं वेदाप पुनर्मृत्युं तरति सावित्र्या एव सलोकतां जयति सावित्र्या एव सलोकतां जयति ६ २८

द्वादशेऽनुवाके द्वितीयः खराडः द्वादशोऽनुवाकस्समाप्तः

इत्युपनिषद्ब्राह्मणं समाप्तम्